धन्
२२

योगवासिष्ठे ।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणांगतिः ।
तथैव ज्ञानकर्मभ्यां जायते परमं पदम् ॥१॥
केवलात्कर्मणो ज्ञानान्नहि मोक्षोऽभिजायते ।
किंतूभाभ्यां भवेन्मोक्षः साधनं तूभयंविदुः ॥२॥

महाभारते ।

विद्या वित्तं वपुःशौर्य्यं कुले जन्म विरोगिता ।
संसारोच्छित्तिहेतुश्च धर्मादेव प्रवर्तते ॥३॥
अर्थसिद्धिं परामिच्छन् धर्ममेव समाचरेत् ।
नहि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥४॥
धर्मं चिन्तयमानोऽपि यदि प्राणैर्वियुज्यते ।
ततः स्वर्गमवाप्नोति धर्मस्यैतत् फलं विदुः ॥५॥
येऽर्थाधर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् ।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥६॥
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ।

उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात् सुखम् ७॥

स्कन्दपुराणे ।

धर्मात्सुखं च ज्ञानं च धर्मादुभयमाप्नुयात् ।
तस्मात् सर्वं परित्यज्य विद्वान् धर्मं समाचरेत् ॥८॥
धर्मात् संजायते ह्यर्थो धर्मात् कामोऽभिजायते ।
धर्मादेव परं ब्रह्म तस्माद्धर्मं समाश्रयेत् ॥ ९ ॥

तत्रैव व्यासः ।

धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखसम्भवः ।
तस्माद्धर्मं सुखार्थाय कुर्य्यात् पापं च वर्जयेत् ॥१०॥
लोकद्वयेपि यत्सौख्यं तद्धर्मात् प्राप्यते यतः ।
धर्ममेकमनाः कुर्य्यात् सर्वकामार्थसिद्धये ॥ ११ ॥
यः कर्म धर्म संयुक्तं मनसापि विचिन्तयेत् ।
संवर्द्धते यथेच्छातः शुक्लपक्षे इवोडुराट् ॥१२॥
दीर्घकालेन तपसा सेवितेन तपोधनाः ।
धर्मनिर्धूतपापानां संसिध्यन्ति मनोरथाः ॥१३॥

धर्मवृद्ध्यै च वर्द्धन्ते सर्वभूतानि सर्वदा ।
तस्मिन् ह्रसति हीयन्ते तस्माद्धर्मं विवर्द्धयेत् १४

मनुः ।

नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ १५ ॥
एकः प्रजायते जन्तुरेकएव प्रलीयते ।
एकोऽनुभुंक्ते सुकृतमेकएव च दुष्कृतम् ॥ १६ ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ॥
विमुखाबान्धवा यान्ति धर्मस्तमनुगच्छति॥ १७॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ १८ ॥

दक्षस्मृतौ ।

न क्लेशेन विना द्रव्यं विना द्रव्येण न क्रिया ।
क्रियाहीने न धर्मः स्याद्धर्महीने कुतः सुखम् ॥ १९ ॥
सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम् ।

तस्माद्धर्मः सदाकार्यः सर्ववर्णैः प्रयत्नतः ॥२०॥

बृहत्पाराशरौ ।

चतुर्णामपि वर्णानामाचारोधर्मपालनम् ।
आचारहीनदेहानां भवेद्धर्मः पराङ्मुखः ॥२१॥

वसिष्ठस्मृतौ ।

आचारः परमोधर्मःसर्वेषामिति निश्चयः ।
हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति ॥२२॥
नैनं प्रयाति न ब्रह्मनाग्निहोत्रं न दक्षिणा ।
हीनाचाराश्रितं भ्रष्टंतारयन्ति कथंचन ॥२३॥
आचारहीनं न पुनन्ति वेदा,
यद्यप्यधीताः सह षड्भिरङ्गैः ॥
छन्दांस्येनं मृत्युकाले त्यजन्ति,
नीडं शकुंताइव जातपक्षाः ॥२४॥
आचारहीनस्य तु ब्राह्मणस्य,

१ धर्महेत्वाचारमतिपालनप्रकरणारम्भः ।

वेदाःषडंगाअखिलाःसपक्षाः,
कां प्रीतिमुत्थापयितुं समर्था-
अन्धस्य दाराइव दर्शनीयाः ॥२५॥
नैनं छन्दांसि वृजिनात्तारयन्ति,
मायाविनं माययावर्तमानम् ॥
तत्राक्षरे सम्यगधीयमाने,
पुनाति तद्ब्रह्म यथावदिष्टम् ॥२६
दुराचारोहि पुरुषोलोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥२७॥
आचारात्फलते धर्ममाचारात्फलते धनम् ।
आचाराच्छ्रियमाप्नोति आचारोहन्त्यलक्षणम् २८
सर्वलक्षणहीनोपि यः सदाचारवान्नरः ।
श्रद्दधानोनसूयश्च शतंवर्षाणि जीवति ॥ २९॥

गीतायाम् ।

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।

श्रद्धावन्तोऽनसूयन्तोमुच्यन्ते तेपि कर्मभिः॥३०॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥३१॥

मनुः ।

आचारः परमोधर्मः श्रुत्युक्तः स्मार्तएव च ।
तस्मादस्मिन्सदायुक्तोनित्यंस्यादात्मवान्द्विजः३२
आचाराद्विच्युतोविप्रोन वेदफलमश्नुते ।
आचारेण तु संयुक्तः संपूर्णफलभाग् भवेत् ॥३३॥

इत्थं सर्वेषां वर्णानां धर्मः प्रधानतया आश्रयणीयइति निरूपिते ॥

अथ धर्मलक्षणमाह ॥ मनुः ।

वेदःस्मृतिःसदाचारःस्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥३४॥

याज्ञवल्क्यस्मृतौ ।

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥३५

देशे काले उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ ३६ ॥
चत्वारोवेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा ।
साब्रूतेयं सधर्मःस्यादेकोवाऽध्यात्मवित्तमः ॥ ३७ ॥

मनुः ।

धृतिःक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥
धीर्विद्या सत्यमक्रोधोदशकं धर्मलक्षणम् ॥ ३८

महाभारते ।

अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ ३९

अत्रिः ।

वेदाःप्रमाणं स्मृतयः प्रमाणं,
धर्मार्थयुक्तं बचनं प्रमाणम् ॥
एतत् त्रयं यत्र भवेत्प्रमाणं,
तद्वाक्ययुक्तं कुरु तत्प्रमाणम् ॥ ४० ॥

बृहत्पाराशरौ ।

पर्षद्दशावरा प्रोक्ता ब्राह्मणैर्वेदपारगैः ।
सायद्ब्रूयात्सधर्मःस्यात् स्वयंभूरित्यकल्पयत्।४१॥
वेदशास्त्रविदोविप्रा यं ब्रूयुः सप्त पंच वा ।
त्रयोवापि सधर्मःस्यादेकोवाध्यात्मवित्तमः॥४२॥
संयमं नियमं वापि उपवासादिकं च यत् ।
तद्गिरा परिपूर्णा स्यान्निष्कृतिर्व्यावहारिकी ४३
न लक्षेणापि मूर्खाणां न चैवाधर्मवेदिनाम् ।
विदुषां नापि लुब्धानां न चापि पक्षपातिनाम् ४४
श्रुताध्ययनसंपन्नःसत्यवादी जितेन्द्रियः ।
सदाधर्मरतः शान्तएकः पर्षत्त्वमर्हति ॥ ४५ ॥

व्यासस्मृतौ ।

श्रुतिस्मृतिपुराणानां विरोधो यत्रदृश्यते ।
तत्रश्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरा ॥ ४६ ॥

मनुरपि ।

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।

धर्मजिज्ञासमानानां प्रमाणं परमंश्रुतिः ॥ ४७ ॥
श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ॥
उभावपि हितौ धर्मौ सम्यगुक्तौ मनीषिभिः॥ ४८॥
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
ससाधुभिर्बहिष्कार्योनास्तिकोवेदनिन्दकः॥ ४९॥

अत्रिस्मृतौ ।

वेदं गृहीत्वा यः कश्चित् शास्त्रं चैवावमन्यते ।
ससद्यः पशुतां याति संभवानेकविंशतिम्॥ ५०॥

महाभारते।

येनास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः ।
अधर्मज्ञादुराचारास्ते भवन्ति गतायुषः ॥ ५१ ॥

इदानीं द्विजन्मनां ब्राह्मणादीनां कोधर्मोनित्यं परिसेवनीय इत्यपेक्षायामाह ॥

बृहत्पाराशरौ ।

षट्कर्माभिरतोनित्यं देवतातिथिपूजकः ।

हुतशेषं तु भुंजानोब्राह्मणोनावसीदति ॥५२ ॥
सन्ध्या स्नानं जपश्चैव देवतानां च पूजनम् ।
वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने॥५३॥

मनुरपि ।

पंचसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च वध्यते यास्तु वाहयन्॥५४॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पंचक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥५५॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमोदैवोवालिभौतोनृयज्ञोऽतिथिपूजनम्॥ ५६ ॥
पञ्चैतान्योमहायज्ञान्नहापयति शक्तितः ।
सगृहेपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ ५७ ॥
देवतातिथिभृत्यानां पितृणामात्मनश्च यः ।
न निर्वपति पंचानामुच्छ्वसन्न स जीवति ॥५८॥

एतानि कर्माणि गृहस्थानां यथा ।धिकारं ।नित्यमेव

कर्त्तव्यानि। तेषां कर्मणां तथाऽन्यानपि गृहस्थादीनां धर्मान् यतस्ततः संगृह्य यथाशक्तिविचारः क्रियते। तत्रादौ प्रातःस्मरणं लिख्यते ॥

अथ प्रातःस्मरणमारम्भः ।

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं,
सच्चित्सुखं परमहंसगतिं तुरीयम् ॥
यत्स्वप्नजागरसुषुप्तमवैति नित्यं,
तद्ब्रह्म निष्कलमहं न च भूतसंघः ॥१॥
प्रातर्भजामि मनसोवचसामगम्यं,
वाचोविभान्ति निखिलायदनुग्रहेण ॥
यन्नेति नेति वचनैर्निगमा अवोचु-
स्तं देवदेवमजमच्युतमाहुरग्रयम्॥ २ ॥
प्रातर्नमामि तमसःपरमर्कवर्णं,
पूर्णं सनातनपदं पुरुषोत्तमाख्यम् ॥
यस्मिन्निदं जगदशेषमशेषमूर्त्तौ,
रज्ज्वां भुजंगमइव प्रतिभासि तं वै ॥ ३ ॥

श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् ।
प्रातःकाले पठेद्यस्तु सगच्छेत्परमं पदम् ॥ ४ ॥

अथ शिवस्तोत्रम् ।

प्रातःस्मरामि भवभीतिहरं सुरेशं,
गङ्गाधरं वृषभवाहनमम्बिकेशम् ॥
खट्वाङ्गशूलवरदाभयहस्तमीशं,
संसाररोगहरमौषधमद्वितीयम् ॥ १ ॥
प्रातर्नमामि गिरिशं गिरिजार्धदेहं,
सर्गस्थितिप्रलयकारणमादिदेवम् ॥
विश्वेश्वरं विजितविश्वमनोभिरामं,
संसाररोगहरमौषधमद्वितीयम् ॥ २ ॥
प्रातर्भजामि शिवमेकमनन्तमाद्यं,
वेदान्तवेद्यमखिलं पुरुषं महान्तम् ॥
नामादिभेदरहितं षडभावशून्यं,
संसाररोगहरमौषधमद्वितीयम् ॥ ३ ॥

प्रातः समुत्थाय शिवं विचिन्त्य,
श्लोकत्रयं येऽनुदिनं पठन्ति ॥
ते दुःखजातं बहुजन्मसंचितं,
हित्वा पदं यान्ति तदेव शम्भोः ॥ ४ ॥

अथ नारायणस्तोत्रम् ।

प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै,
नारायणं गरुडवाहनमब्जनाभम् ॥
ग्राहाभिभूतवरवारणमुक्तिहेतुं,
चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ १॥
प्रातर्नमामि मनसावचसा च मूर्ध्ना,
पादारविन्दयुगलं परमस्य पुंसः ॥
नारायणस्य नरकार्णवतारणस्य,
पारायणप्रवणविप्रपरायणस्य ॥ २ ॥
प्रातर्भजामि भजतामभयंकरं तं,
प्राक् सर्वजन्मकृतपापभयापहत्यै ॥
योग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोर-

शोकप्रणाशनकरो धृतशङ्खचक्रः ॥ ३ ॥
श्लोकत्रयमिदं पुण्यं प्रातःप्रातः पठेन्नरः ॥
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥४॥

नवग्रहस्तुतिः ।

ब्रह्मा मुरारिस्त्रिपुरान्तकारी,
भानुः शशिः भूमिसुतोबुधश्च ॥
गुरुश्च शुक्रः शनिराहुकेतवः,
कुर्वन्तु सर्वे मम सुप्रभातम् ॥१॥

ऋषिस्तुतिः ।

भृगुर्वसिष्ठः क्रतुरङ्गिराश्च,
मनुः पुलस्त्यः पुलहश्च गौतमः ॥
रैभ्योमरीचिश्च्यवनश्च दक्षः,
कुर्वन्तु सर्वे मम सुप्रभातम् ॥१॥
सनत्कुमारः सनकः सनन्दनः,
सनातनोऽप्यासुरिपिङ्गलौ च ॥

सप्त स्वराः सप्त रसातलानि,
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ २॥
सप्तार्णवाः सप्तकुलाचलाश्च,
सप्तर्षयोद्वीपवनानि सप्त ॥
भूरादिकृत्वा भुवनानि सप्त,
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३॥
पृथ्वी सगन्धा सरसास्तथापः,
स्पर्शीच वायुर्ज्वलितं च तेजः ॥
नभः सशब्दं महता सहैव,
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ४ ॥
इत्थं प्रभाते परमं पवित्रं,
पठेत्स्मरेद्वा शृणुयाच्च तद्वत् ॥
दुःखप्रणाशस्त्विह सुप्रभातं,
भवेच्च नित्यं भगवत्प्रसादात् ॥ ५ ॥

पुण्यश्लोकजनस्तुतिः ।

पुण्यश्लोकोनलोराजा पुण्यश्लोकोयुधिष्ठिरः ।

पुण्यश्लोका च वैदेही पुण्यश्लोकोजनार्द्दनः ॥१॥
अश्वत्थामा वलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरञ्जीविनः ॥२॥
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥३॥
अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पंचकन्यास्मरेन्नित्यं महापातकनाशनम् ॥ ४ ॥

प्रह्लादनारदपराशरपुण्डरीक-
व्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् ॥
रुक्माङ्गदार्जुनवासिष्ठविभीषणादीन्,
पुण्यानिमान्परमभागवतान नमामि ॥ ५ ॥
धर्मोविवर्धत्ति युधिष्ठिरकीर्तनेन,
पापं प्रणश्यति वृकोदरकीर्त्तनेन ॥
शत्रुर्विनश्यति धनंजयकीर्तनेन,
माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥६ ॥

विश्वेशं माधवं धुण्डि दण्डपाणिं च भैरवम् ॥

वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ७ इति

प्रातःकालेदर्शनीयपदार्थाः ॥ आचारप्रदीपे।

कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ॥

करमूले स्थितोब्रह्मा प्रभाते करदर्शनम् ॥ १ ॥

नारदः ।

लोकेस्मिन् मङ्गलान्यष्टौ ब्राह्मणोगौर्हुताशनः ॥

हिरण्यं सर्पिरादित्यआपोराजा तथाष्टमः॥ २॥

एतानि सततं पश्येन्नमस्येच्चार्च्चयेच्च यः ॥

प्रदक्षिणं च कुर्वीत तथास्यायुर्न हीयते ॥ ३ ॥

कात्यायनः ।

रोचनं चन्दनं गन्धं मृदं गां दर्पणं मणिम् ।

गुरुमग्निं रविं पश्येन्नमस्येत्प्रातरेव हि ॥ ४ ॥

लघुपाराशरौ ।

अग्निश्वित्कपिला सत्री राजा भिक्षुर्महोदधिः ॥

दृष्टमात्राःपुनन्त्येते तस्मात्पश्येत्तु नित्यशः ॥५॥

कात्यायनस्मृतौ ।

श्रोत्रियं सुभगां गां च अग्निमग्निचितिं तथा ॥

प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥६॥

आह्निकसूत्रावलौ ।

भारद्वाजमयूराणां चाषस्य नकुलस्य च ॥
प्रभाते दर्शनं श्रेष्ठं वामपृष्ठे विशेषतः ॥ ७ ॥

प्रातःकाले दर्शनायोग्याः पदार्थाः ॥ तत्रैव ।

भल्लातकं कर्षफलं काकमार्जारमूषकान् ॥
क्लीवं च गर्दभं चैव न पश्येत्प्रातरेव हि ॥ ८ ॥

कात्यायनस्मृतौ ।

पापिष्ठं दुर्भगामन्यं नग्नमुत्कृत्तनासिकम् ॥
प्रातरुत्थाय यः पश्येत्सकलैरुपयुज्यते ॥ ९ ॥

अथ शौचविचारः ॥ बृहत्पाराशरौ ।

कर्तव्यं यत्नतः शौचं शौचमूलाद्विजाः स्मृताः ॥
शौचाचारविहीनानां सर्वाः स्युर्निष्फलाः क्रियाः १
तत्साद्भिर्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ॥
विण्मूत्रशोधनं वाह्यं चित्तशुद्धिस्तदान्तरम् ॥२॥
मृद्भिरद्भिर्वहिःशौचं तत्कर्तव्यं द्विजातिभिः ॥
भावशुद्धिः परं शौचमाहुराभ्यन्तरं बुधाः ॥ ३ ॥

गन्धलेपापहं वाह्यं शौचमाहुर्मनीषिणः ॥
यस्य पुंसश्च तच्छौचं शौचैस्तस्य किमन्यकैः ४
वाङ्मनोजलशौचानि सदा येषां द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतोयः सस्वर्ग्यो नात्र संशयः॥ ५ ॥

अत्रिस्मृतौ ।

अभक्षपरिहारश्च संसर्गश्चाप्यनिन्दितैः ॥
आचारेषु व्यवस्थानं शौचमित्यभिधीयते ॥ ६ ॥

मनुः ।

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ॥
योऽर्थे शुचिर्हि सशुचिर्न मृद्वारिशुचिः शुचिः॥७॥

योगियाज्ञवल्क्यः ।

शौचं तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ॥
मृज्जलाभ्यां स्मृतं वाह्यं मनःशुद्धिस्तथान्तरम्८
मनःशुद्धिश्च विज्ञेया धर्मेणाध्यात्मविद्यया ॥
आत्मविद्या च धर्मश्च पित्राचार्येण चानघे ॥९॥
तस्मात्सर्वेषु कालेषु सर्वैर्निःश्रेयसार्थिभिः ॥
गुरवः श्रुतसम्पन्ना मान्या वाङ्मनसादिभिः १०

महाभारते ।

अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममा ॥
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥ ११॥
प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः ॥
तथा निष्किंचनत्वं च मनसश्च प्रसन्नता॥ १२॥
वृत्तशौचं मनःशौचं तीर्थशौचमतःपरम् ॥
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं स्मृतम् १३

सदाचारस्तोत्रे ।

अत्यन्तमलिनोदेहोदेही चात्यन्तनिर्मलः ॥
असंगोहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥१४॥

शौचे उपवीतधारणप्रकारः ॥ आह्निकसूत्रावलौ ।

उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् १५

धर्मसिन्धौ ।

यज्ञोपवीतं निवीतं पृष्ठतःकर्णे वा कृत्वा मूत्रपुरीषोत्सर्गं कुर्यात् ॥ यज्ञोपवीतस्य निवीतत्वं विनैव कर्णे धारणमनाचारः ॥ १६ ॥

शौचे वर्ज्यपदार्थाः ॥ वसिष्ठस्मृतौ ।

प्रत्यग्निं प्रतिसूर्यं च प्रतिगां प्रति च द्विजम् ॥
प्रतिसोमोदकं सन्ध्यां प्रज्ञा नश्यति मेहतः ॥१७॥
न नद्यां मेहनं कार्यं न भस्मनि न गोमये ॥
न वाकृष्टेन मार्गे च नोप्ते क्षेत्रे न शाद्वले ॥१८॥

गौतमस्मृतौ ।

न वाय्वग्निविप्रादित्यापोदेवता गाश्च प्रतिपश्यन् वा मूत्रपुरीषामेध्यान्युदस्येत्॥ नैता देवताः प्रतिपादौ प्रसारयेत् ॥ १६ ॥

मनुः ।

न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ॥
न फालकृष्टे न जले न चित्यां न च पर्वते ॥
न जीर्णदेवायतने न वल्मीके कदाचन ॥ २० ॥
न ससत्त्वेषु गर्तेषु न गच्छन्नपि च स्थितः॥
न नदीतीरमासाद्य न च पर्वतमस्तके ॥ २१ ॥
वाय्वग्निविप्रमादित्यमपःपश्यंस्तथैव गाः॥

न कदाचन कुर्वीत विण्मूत्रस्य बिसर्जनम्॥ २२॥
प्रत्यग्निं प्रति सूर्यं च प्रतिसोमोदकद्विजान्॥
प्रतिगां प्रतिवातं च प्रज्ञा नश्यति मेहतः॥ २३॥

आचारादर्शे देवलः।

वापीकूपनदीगोष्ठचित्यंभः पथि भस्मसु॥
अग्नौ काम्ये श्मशानेच विण्मूत्रं न समाचरेत्॥ २४॥

तत्रैव यमः।

पल्वलानि तडागानि नदीप्रस्रवणानि च॥
नगगोमयभस्मानि फालकृष्टानि वर्जयेत्॥ २५॥
तुषाङ्गारकपालानि देवतायतनानि च॥
राजमार्गं श्मशानानि क्षेत्राणि च खलानिच॥ २६॥
उपरुद्धोन सेवेत छायां दृश्यं चतुष्पथम्॥
उदकं चोदकान्तंच पन्थानं च विवर्जयेत्॥
वर्जयेद्वृक्षमूलानि चैत्यश्वभ्रविलानि च॥ २७॥

तत्रैव हारीतः॥

न च त्वरोपद्धारयोर्मूत्रपुरीषे कुर्यान्नतीर्थे न सस्यसंपन्ने न यज्ञियानां वृक्षाणामधस्तात्॥ २८॥

आपस्तम्बः तत्रैव ।

न सोपानत्कोमूत्रपुरीषे कुर्यात् ॥ २६ ॥

धर्मसिन्धौ ।

अनुपानत्कआसीनो मूत्रपुरीषोत्सर्गं कुर्यात् ॥ ३० ॥

शौचे उक्तादिशः ॥ मनुः ।

मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ॥
दक्षिणाभिमुखोरात्रौ सन्ध्ययोश्च यथादिवा ॥ ३१ ॥
छायायामन्धकारे वा रात्रावहनि वाद्विजः ॥
यथा सुखमुखः कुर्यात् प्राणवाधाभयेषु च ॥ ३२ ॥

आचारादर्शे यमः ।

प्रत्यङ्मुखस्तु पूर्वाह्ने सायाह्ने प्राङ्मुखस्तथा ॥
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥ ३३ ॥

वशिष्ठस्मृतौ ।

उभे मूत्रपुरीषे तु दिवाकुर्यादुदङ्मुखः ॥
रात्रौ कुर्याद्दक्षिणस्थएवं ह्यायुर्न हीयते ॥ ३४ ॥

शौचे वर्ज्यमृत्तिका ॥ वसिष्ठस्मृतौ ।

अन्तर्जले देवगृहे वल्मीके मूषकस्थले ॥

कृतशौचावशिष्टाच न ग्राह्याः पंचमृत्तिकाः॥ ३५॥

आत्रिस्मृतौ ।

मृत्तिकाःसप्त न ग्राह्या वल्मीके ऊषरस्थले ॥
अन्तर्जले श्मशानान्ते वृक्षमूले सुरालये ॥
वृषभैश्च तथोत्खाते श्रेयस्कामैः सदाबुधैः ॥ ३६ ॥

यमस्मृतौ ।

कुड्यान्तर्जलवल्मीकमूषिकोत्करवर्त्मसु ॥
श्मशाने शौचशेषे च न ग्राह्याःसप्त मृत्तिकाः॥ ३७॥

शौचे ग्राह्यमृत्तिका ॥ वसिष्ठस्मृतौ ।

आहरेन्मृत्तिकां विप्रःकूलात् ससिकतां तथा ॥

आत्रिस्मृतौ ।

शुचौ देशे तु संग्राह्या शर्कराश्मविवर्जिता॥ ३८॥

आचारादर्शे यमोपि ।

आहरेन्मृत्तिकां विप्रः कूलात्सासिकतां तथा ॥

मनुः ।

तिरस्कृत्योच्चरेत्काष्ठलोष्टपत्रतृणादिना ॥
नियम्य प्रयतोवाचं संवीताङ्गोऽवगुण्ठितः॥ ३९ ॥

आचारादर्शे वायुपुराणे ।

शुष्कैस्तृणैस्तथा काष्ठैः पत्रैर्वेणुदलेन वा ॥
मृन्मयैर्भाजनैर्वापि अन्तर्द्धाय वसुन्धराम् ॥४०॥
वसिष्ठस्मृतौ। परिवेष्टितशिरामूत्रपुरीषे कुर्यात् ॥

आचारादर्शे हारीतः ।

घ्राणास्यं वाससा वेष्टयित्वा मृद्धात्रीं कण्ठे समासज्य दक्षिणवाहुपार्श्वे कमण्डलुमादाय ॥

यमः ।

शिरः प्रच्छाद्य कुर्वीत शकृन्मूत्रविसर्जनम् ॥

आह्निकसूत्रावलौ ॥ अंगिराः ।

दशहस्तां परित्यज्य मूत्रं कुर्याज्जलाशये ॥
दशहस्तान् पुरीषार्थे तीर्थे नद्यां चतुर्गुणम्॥४१॥

धर्मसिन्धौ ।

हस्तान्द्वादश सन्त्यज्य मूत्रं कुर्याज्जलाशयात्॥
अथवाशे षोडशे वा पुरीषे तु चतुर्गुणम् ॥ ४२ ॥
मनुः। न विण्मूत्रमुदीक्षेत ॥

धर्मसिन्धौ—स्वशकृद्दर्शने च सूर्यं गां वा पश्येत् ॥

आचारादर्शे व्यासः ।

शौचं कृत्वा मूत्रोच्चारौ न पश्येत् दृष्ट्वादित्य-मग्निं सोमं वा पश्येत् ॥

विष्णुपुराणे—तिष्ठेन्नातिचिरं तत्र ॥ ४३ ॥

गौतमस्मृतौ ।

न पर्णलोष्टाश्मभिः मूत्रपुरीषापकर्षणं कुर्यात् ४४

व्यासः आचारादर्शे ।

नाश्ममूलफलांगारैरुन्मृजेन्नास्थिवर्हिषा ॥

आपस्तम्बोऽप्याह ।

आर्द्रानोषधिवनस्पतीनाच्छिद्य मूत्रपुरीषयोः स्रंसनकर्म वर्जयेत् ॥ ४५ ॥

तत्रैव हारीतः ।

लोष्टेन प्रमृजीत शुष्ककाष्ठेन वा प्रमृजीत ॥

अथशौचम् ॥ मनुः ।

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत् ॥

दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि॥ ४६॥
वसा शुक्रमसृङ्‌ मज्जा मूत्रं विट्‌ घ्राणकर्णविट्‌ ॥
श्लेष्माश्रुदूषिका स्वेदोद्वादशैते नृणां मलाः ॥४७॥

अत्रिस्मृतौ ।

षण्णां षण्णां क्रमेणैव शुद्धिरुक्ता मनीषिभिः ॥
मृद्वारिभिश्च पूर्वेषामुत्तरेषां तु वारिणा ॥४८॥

वासिष्ठस्मृतौ ।

उद्धृताभिरद्भिः कार्यं कुर्यात्स्नानमनुद्धृता ॥

शंखस्मृतौ ।

उद्धृतेनांभसा शौचं मृदा चैव समाचरेत्‌ ॥४९॥

शौचे मृत्तिकाप्रमाणम्‌ ॥ पुरीषे । मनुः ।

एकालिङ्गे गुदे तिस्रस्तथैकत्र करे दश ॥
उभयोः सप्त दातव्यामृदः शुद्धिमभीप्सता ॥५०॥

दक्षस्मृतौ ।

एका लिङ्गे गुदे तिस्रोदश वामकरे तथा ॥
उभयोःसप्त दातव्यामृदास्तिस्रस्तु पादयोः॥५१॥

मूत्रशौचे वसिष्ठस्मृतौ ।

एका लिङ्गे करे तिस्रउभाभ्यां द्वे तु मृत्तिके ॥

धर्मसिन्धौ ।

मूत्रोत्सर्गे शुद्धमृदं सकृल्लिङ्गे त्रिवारं वामकरे द्विवारमुभयोःकरयो र्दत्वा तावद्वारं जलेन क्षालयेत्॥मूत्रस्तु द्विगुणं शुक्रे मैथुने त्रिगुणं स्मृतम्५२

शंखस्मृतौ ।

मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्त्तिते ॥
एकस्मिन्विंशतिर्हस्ते द्वयोर्देयाश्चतुर्दश ॥५३॥
तिस्रस्तु मृत्तिकाज्ञेयाःकृत्वा नखविशोधनम्॥
तिस्रस्तु पादयोर्ज्ञेयाः शौचकामस्य सर्वदा॥५४॥
शौचमेतद्गृहस्थानां द्विगुणं ब्रह्मचारिणाम्॥
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम्॥५५॥
मृत्तिका च विनिर्दिष्टा त्रिपर्व पूर्यते यया ॥
धर्मसिन्धौ । मृदार्द्रामलकमात्रा ॥५६॥
बौधायनः । मूत्रवद्रेतसः समुत्सर्गे ॥

आचारादर्शे देवलः ।

धर्मविद्दक्षिणं हस्तमधः शौचेन योजयेत् ॥
तथैव वामहस्तेन नाभेरूर्द्ध्वं न शोधयेत् ॥ ५७॥

तत्रैव आपस्तम्बः ।

अह्नि शौचं यथा प्रोक्तं निश्यर्द्धं तु तादिष्यते॥
पथि पादस्तु विज्ञेयआर्तः कुर्याद्यथाबलम्॥५८॥

दक्षस्मृतौ ।

दिवा कृतस्य शौचस्य रात्रावर्द्धं विधीयते ॥
तदर्धमातुरस्याहुस्त्वरायान्त्वर्द्धमध्वनि ॥५९ ॥
दिवा यद्विहितं कर्म तदर्धं च निशि स्मृतम्॥
तदर्धंचातुरे काले पथि शूद्रवदाचरेत् ॥६०॥

आह्निकसूत्रावलौ ॥ आश्वलायनः ।

लिंगशौचं पुरा कृत्वा गुदशौचं ततः परम् ॥

तत्रैव ।

एकवस्त्रं विनापात्रं सव्ययज्ञोपवीतिकम् ॥
प्रत्यक्षं तु नदीशौचं कुर्वञ्छूद्रत्वमाप्नुयात्॥ ६१ ॥

तत्रैव सायणीये ।

मलमूत्रं त्यजेद्विप्रो विस्मृत्यैवोपवीतधृक् ॥
उपवीतं तदुत्सृज्य धार्यमन्यन्नवं तदा ॥ ६२ ॥

धर्मसिन्धौ ।

कण्ठलंबितत्वाद्यकृत्वा मलमूत्रोत्सर्गे च त्यागः । जलालाभेन शौचविलम्बे सचैलं स्नानम् । यथोक्तशौचाकरणे तु गायत्र्यष्टशतं जप्त्वा प्राणायामत्रयं चरेत् ॥ ६३ ॥

अत्रिस्मृतौ ।

तैलाभ्यक्तोघृताभ्यक्तोविण्मूत्रं कुरुते द्विजः॥
अहोरात्रोषितो भूत्वा पञ्चगव्येनशुद्ध्यति॥६४॥

आह्निकसूत्रावलौ ।

गङ्गातोयेन कृत्स्नायामृदोभारैश्च गोमयैः॥
आमृतेराचरन् शौचं भावदुष्टेन शुद्ध्यति ॥६५॥

आचारादर्शे ऋष्यशृंगः ।

यस्मिंस्थाने कृतं शौचं वारिणा तच्च शोधयेत्॥
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत्॥६६॥

गण्डूषविचारः ॥ आह्निकसूत्रावलौ नागदेवः ।

मूत्रे पुरीषे भुक्त्यन्तेरेतः प्रस्रवणे तथा ॥
चतुरष्टद्विषड्द्व्यष्टगण्डूषैःशुद्धिमाप्नुयात्॥ ६७ ॥

तत्रैव आश्वलायनः ।

कुर्याद्द्वादशगण्डूषां पुरीषोत्सर्जने ततः ॥
मूत्रोत्सर्गे च चतुरो भोजनान्ते तु षोडश ॥ ६८॥
भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमाचरेत् ॥

तत्रैव प्रयोगपारिजाते ।

पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा ॥
ऋषयः पृष्ठतः सर्वे वामे गण्डूषमाचरेत् ॥ ६९ ॥
तत्रैव। शौचस्तु शयने संगे भोजने दन्तधावने ॥
शिखामुक्तिं सदा कुर्यादित्येतन्मनुरब्रवीत्॥७०॥

तत्रैव हारीतः ।

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ॥
श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत्॥७१॥
अंगिराः।सन्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने॥
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥ ७२॥

गुरूणां सन्निधौ दाने योगे चैव विशेषतः॥
एतेषु मौनमातिष्ठेत् स्वर्गं प्राप्नोति मानवः॥ ७३॥

अत्रिस्मृतौ।

पुरीषे मैथुने होमे प्रस्रावे दन्तधावने॥
स्नानभोजनजाप्येषु सदा मौनं समाचरेत्॥ ७४॥

कच्छविचारः॥आ० सू० संग्रहे।

वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम्॥
त्रिभिः कच्छैःपरिज्ञेयो विप्रोयः सशुचिर्भवेत्॥७५

ग्रन्थान्तरे।

आदौ कच्छस्ततोनीवी नाभिमध्ये च वाससी॥
नीवी दाक्षिणतःस्थाप्या एतत् त्रिकच्छलक्षणम् ७६
कच्छेन सहितोविप्रोमूत्रोत्सर्गं करोति चेत्॥
अज्ञानाज्ज्ञानतोवापि पादकृच्छ्रेण सिद्ध्यति ७७
गुह्यं प्रक्षाल्य सलिलैर्मूत्रोत्सर्गादनन्तरम्॥
गण्डूषत्रितयं कृत्वा तेन शुद्धो भवेद्द्विजः॥७८॥
मुक्तकच्छस्तु यो विप्रोधरण्यां पादतश्चरेत्॥
पदे पदे सुरापानं प्रायश्चित्तं न विद्यते॥७९॥ इति·

अथ दन्तधावनविचारः ॥ २ ॥ दक्षस्मृतौ ।

उषःकाले च सम्प्राप्ते शौचं कृत्वा यथार्थवत् ॥
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ १ ॥

मनुः।मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ॥
पूर्वाह्णएव कुर्वीत देवतानां च पूजनम् ॥ २ ॥

बृहत्पाराशरौ ।

अविद्वान्स्नानकाले तु यःकुर्याद्दन्तधावनम् ॥
पापीयान्रौरवे याति पितृशापहतोद्विजः ॥३॥
अंगुल्यादन्तकाष्ठं यत्प्रत्यक्षं लवणं तथा ॥
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ ४ ॥

अत्रिस्मृतावप्येवम् ।। धर्मसिन्धौ ।

प्रदेशिनीवर्ज्यांगुल्या वा ।

पुनः बृहत्पाराशरौ ।

पलाशशिंशपाकाष्ठैर्दन्तधावनकृन्नरः ॥
दिवाकीर्तिसमस्तावद्यावद्धेनुं न पश्यति ॥ ५ ॥

गौतमस्मृतौ ।

पालाशमासनं पादुके दन्तधावनमिति च वर्जयेत्।

अत्रिस्मृतौ ।

कार्पासं दन्तकाष्ठं च विष्णोरपि श्रियं हरेत्।। ६।।

आह्निकसूत्रावलौ गर्गः ।

कुशं काशं पलाशं च शिंशुपं यस्तु भक्षयेत् ॥

तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति ॥७॥

अर्धशुष्कं त्वचाहीनं यत्नेन परिवर्जयेत् ॥

पतितं चातिरिक्तं च कीटविद्धं तथैव च ॥ ८ ॥

नागदेवः ।

नाङ्गुलीभिश्च मृद्भिश्च पर्णैर्लोष्टैश्च भस्मना ॥

नायसैश्च तथा लोहैः सदा दन्तान् मृजेद्द्विजः ९

विष्णुस्मृतौ ।

कनीन्यग्रसमं स्थौल्यं सकूर्चं द्वादशाङ्गुलम् ॥

प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥ १० ॥

उषःकाले समुत्थाय कृतशौचोयथाविधि ॥
मुखे पर्य्युषिते नित्यं भवत्यप्रयतोनरः ॥११॥
तस्माच्छुष्कमथार्द्रंवा भक्षयेद्दन्तकाष्ठकम् ॥
करञ्जं खदिरं वापि कदम्बं कुरबं तथा ॥१२॥
सप्तपर्णं पृश्निपर्णीं जम्बुं निम्बं तथैवच ॥
अपामार्गं च विल्वं चार्कं चोदुम्बरमेव च ॥१३॥
एते प्रशस्ताः कथितादन्तधावनकर्मणि ॥
दन्तकाष्ठस्य भक्ष्यस्य समासेन प्रकीर्त्तितः॥१४॥
सर्वे कण्टाकिनःपुण्याः क्षीरिणश्च यशस्विनः ॥
अष्टांगुलेन मानेन दन्तकाष्ठमिहोच्यते ॥१५॥
प्रादेशमात्रमथवा तेन दन्तान्विशोधयेत् ॥
प्रतिपत्पर्वषष्ठीषु नवम्यां चैव सत्तमाः ॥१६॥
दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥
अभावे दन्तकाष्ठानां प्रतिषिद्धदिनेषु च ॥

अपां द्वादशगण्डूषैर्मुखशुद्धिं समाचरेत् ॥ १७ ॥

आह्निकसूत्रावलौ ॥ धन्वन्तरिः ।

निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥
मधूकोमधुरे श्रेष्ठः करञ्जः कटुके तथा ॥१८॥

तत्रैव विष्णुः ।

प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेवच ॥
दक्षिणेन तथा कष्टं पश्चिमेन पराजयः ॥१९॥
उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च ॥
पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् २०

निर्णयसिन्धौ ॥ पृथिवीचन्द्रोदये विष्णुः ।

प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ॥
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ॥२१॥
नारदः। चतुर्दश्यष्टमी पौर्णमासी संक्रमणेषु च ॥
नन्दासु च नवम्यां च दन्तकाष्ठं विवर्जयेत् २२
श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका ॥
व्यतीपाते च संक्रान्त्यां नन्दाभूताष्टपर्वसु ॥
तैलं क्षौरं रतिं मांसं दन्तकाष्ठं च वर्जयेत् ॥२३॥

वसिष्ठः। शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे ॥
जन्माहे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत् ॥२४॥

हेमाद्रौ स्कान्दे ।

अभ्यंगे जलधिस्नाने दन्तधावनमैथुने ॥
जाते च निधने चैव तत्कालव्यापिनी तिथिः २५
संवर्तः। रवौ विवाहे आशौचे वर्जयेद्दन्तधावनम् ॥

कात्यायनस्मृतौ दन्तधावनमन्त्रः ।

आयुर्बलं यशोवर्च्चः प्रजापशून् वसूनि च ॥
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते॥२६॥

पारस्करगृह्यसूत्रे ॥ दन्तधावनमन्त्रः ।

औदुम्बरेण दन्तान्धावयेदान्नाद्यायव्यूहध्वꣳ सोमोराजा यमागमत्॥ समे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति॥२७॥ इति दन्तधावनविचारः

अथ क्षौरकर्मविचारः ॥ ३ ॥ महाभारते ।

प्राङ्मुखः श्मश्रुकर्माणि कारयेत्सुसमाहितः ॥
उदङ्मुखोवा राजेन्द्र तथाऽऽयुर्विन्दते महत्॥१॥

निर्णयसिन्धौ श्रीपतिः ।

पुष्ये पौष्णे चाश्विनीष्वैन्दवे च शाके हस्ता-
द्ये त्रिकेभेप्यादित्याः ॥ क्षौरं कार्य्यं वैष्णवादित्रये
च मुक्त्वा भौमादित्यपातंगिवारान् ॥ २ ॥

न स्नानभुक्तोत्कटभूषिताना,मभ्यक्तयात्रासम-
रोत्सुकानाम् ॥ क्षौरं विदध्यान्निशि सन्ध्ययोर्वा,
जिजीविषूणां नवमेन चाह्नि ॥ ३ ॥

वृद्धगार्ग्यः ।

रव्यारसौरिवारेषु रात्रौ पाते व्रताहनि ॥
श्राद्धाहःप्रतिपद्रिक्ताभद्राःक्षौरेषु वर्जयेत् ॥ ४ ॥
गार्ग्यःषष्ठ्यमा पूर्णिमा पातचतुर्दश्यष्टमी तथा ॥
आसुसन्निहितं पापं त्रिषु तैले भगे क्षुरे ॥ ५ ॥
देवकार्ये पितुःश्राद्धे रवेरंशपरिक्षये ॥
क्षौरकर्म न कुर्वीत जन्ममासे च जन्मभे ॥ ६ ॥

वृहस्पतिः ।

राजकार्ये नियुक्तानां नराणां भूपजीविनाम् ॥

श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनम् ॥७॥
तथा—क्षौरं नैमित्तिकंकार्यं निषेधेसत्यपिध्रुवम्॥
पित्रादिमृतिदीक्षासु प्रायश्चित्तं च तीर्थके ॥
मुण्डनस्य निषेधेपि कर्त्तनं तु विधीयते ॥८॥
नारदः। नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे ॥
उद्वाहेखिलवारर्क्षे तिथिषु क्षौरमिष्टदम् ॥९॥
दक्षिणं कर्णमारभ्य धर्मार्थं पापसंक्षये ॥
शिखाद्ये नव संस्कारे शिखाद्यन्तशिरोवपेत्॥१०॥

यतीनांतु विशेषोनिगमे ।

कक्षोपस्थशिखावर्जं ऋतुसन्धिषु वापयेदिति अन्येपि विधिप्रतिषेधाः प्रागुक्ताः ॥ ११ ॥

धर्मसिन्धौ । यतीनां क्षौरादौ उदये त्रिमुहूर्त-व्यापिनी पौर्णमासी ग्राह्या तृतीयमुहूर्तस्पर्शाभावे चतुर्दशी युता ॥ इति ॥

आचारादर्शे सुमन्तुः। अनुदकमूत्रपुरीषकरणे नखकेशरुधिरप्राशने सद्यः स्नानम् ॥ १२ ॥

मनुः।शूद्राणांमासिकं कार्यं वपनं न्यायवर्तिनाम्॥
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम्॥१३

नीतिशास्त्रे।

नापितस्य गृहे क्षौरं पाषाणे गन्धलेपनम्॥
आत्मरूपं जले पश्यन् शक्रस्यापिश्रियं हरेत्॥१४
तैलाभ्यंगे चिताधूमे मैथुने क्षौरकर्मणि॥
तावद्भवति चाण्डालो यावत्स्नानं समाचरेत्॥१५॥

मुहूर्तचिन्तामणौ।

दन्तक्षौरनखक्रियात्रविहिता चौलोदितेवारभे,
पातंग्यारखीन्विहाय नवमं घस्त्रं च सन्ध्यांतथा॥
रिक्तां पर्वनिशां निरासनरणग्रामप्रयाणोद्यता-
स्नाताभ्यक्तकृताशनैर्न हि पुनःकार्याहितप्रेप्सुभिः।

निर्णयसिन्धौ वसिष्ठः।

द्वित्रिपंचमसप्तम्यामेकादश्यां तथैव च॥
दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता १७इति

अथ दर्भविचारः॥ ४॥ बृहत्पाराशरी।

दर्भाश्चस्वयमानेया दाक्षिणा प्रवणोद्भवाः॥

तर्पणाद्युज्झिताये वै इत्याद्यांश्च विवर्जयेत्॥ १ ॥
न कुशं कुशमित्याहुर्दर्भमूलं कुशःस्मृतः॥
छिन्ना दर्भाइति प्रोक्तास्तदग्रं कुतपःस्मृतः॥२ ॥
हरिता यज्ञिया दर्भाःपीतकाःपाकयज्ञिकाः॥
सकुशाः पितृदैवत्याश्छिन्नावै वैश्वदेविकाः॥ ३॥
दर्भमूले स्थितोब्रह्मा दर्भमध्ये जनार्दनः॥
दर्भाग्रे शङ्करस्तस्थौ दर्भादेव त्रयान्विताः॥ ४ ॥

लिखितस्मृतौ ।

दर्भाः कृष्णाजिनं मन्त्राब्राह्मणाश्च विशेषतः ॥
नैते निर्माल्यतां यान्ति योक्तव्यास्ते पुनः पुनः५॥
पानआचमने चैव तर्पणे दैविके सदा ॥
कुशहस्तोन दुष्येत यथा पाणिस्तथा कुशः॥६॥
नीवीमध्येषु ये दर्भाब्रह्मसूत्रेषु ये कृताः ॥
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः७
पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम् ॥

मूत्रोच्छिष्टपुरीषं च तेषां त्यागोविधीयते ॥ ८ ॥

आह्निकसूत्रावलौ ॥ कातीयसूत्रभाष्ये ।

कुशाः काशाः शरादूर्वायवगोधूमवल्वजाः ॥
स्वर्णं राजतं ताम्रं दश दर्भाः प्रकीर्तिताः ॥ ९ ॥
कुशाभावे तु काशाः स्युःकाशाःकुशसमाःस्मृताः
काशाभावे गृहीतव्या अन्ये दर्भायथोचिताः ॥
दर्भाभावे स्वर्णरूप्यताम्रैः कर्मक्रिया सदा॥१०॥

आचारादर्शे ॥ लघुहारीतः ।

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ॥
अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः॥११॥

तत्रैव आंगिराः ।

विना दर्भैश्च यत्स्नानं यच्च दानं विनोदकम् ॥
असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत्१२

धर्मसिन्धौ ।

नभोमासस्य दर्शे तु शुचिर्दर्भान्समाहरेत् ॥
अयातयामास्ते दर्भाविनियोज्याः पुनः पुनः१३

केचिद्भाद्रामायां दर्भग्रहणमाहुः ।

कुशाः काशायवादूर्वाउशीराश्च सकुंदकाः॥
गोधूमाव्रीहयोमौंजा दश दर्भाः सवल्वजाः॥ १४॥
विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ॥
नुदसर्वाणि पापानि दर्भ स्वस्तिकरोभव॥ १५॥
एवं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ॥
हुंफट्कारेण मन्त्रेण सकृच्छित्वा समुद्धरेत्॥ १६॥

चतुर्भिर्दर्भैर्विप्रस्य पवित्रं क्षत्रियादेरेकैकन्यूनं सर्वेषां वा भवेत् द्वाभ्यां पवित्रं ग्रन्थितं न वा १७

आह्निकसूत्रावलौ ॥ कुशकाण्डिकासूत्रभाष्ये ।

ब्रह्मयज्ञे गोकर्णमात्रप्रमाणौ द्वौ दर्भौ ॥
तर्पणे हस्तमात्रप्रमाणास्त्रयोदर्भाः ॥ १८ ॥
अमरः । प्रादेशतालगोकर्णास्तर्जन्यादियुते तते॥
अंगुष्ठे सकनिष्ठे स्याद्वितास्तिर्द्वादशाङ्गुल ॥ १९॥

तत्रैव अत्रिः।

अनामिकामूलदेशे पवित्रं धारयेद्‌द्विजः॥
ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ॥
भोजने वर्तुलं प्रोक्तमेवं धर्मो न हीयते ॥२०॥

आह्निककारिकासु।

द्विगुणीकृतानां दर्भशिखानां पाशः प्रदक्षिण-मर्धवेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलोग्रन्थिरिति ॥ यदा प्रादक्षिण्येन सर्ववेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा ब्रह्मग्रन्थिरिति।

तत्रैव—पौष्टिके पञ्चदर्भाश्च चतुर्दर्भाश्च शान्तिके॥
पैतृके तु त्रिदर्भाश्च द्वौ दर्भौ नित्यकर्माणि॥२२॥

तत्रैव नागदेवः।

माषाणां षोडशादूर्ध्वं कुर्याद्धेम पवित्रकम्॥
तेभ्यः स्वल्पतरं न्यूनं न कुर्वीत कदाचन॥२३॥
हीनकर्माणि चोच्छिष्टे कुशजातं पवित्रकम्॥

निर्माल्यरूपं भवति न हेम्नस्तु पवित्रकम् ॥२४॥

तत्रैव शारदायाम् ।

ताम्रतारसुवर्णानामर्कषोडशखेन्दुभिः ॥
कृतात्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी ॥
इदं पवित्रं तर्जन्यां धारयन्ति सदा द्विजाः ॥२५॥

योगियाज्ञवल्क्यः ।

अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च ॥
कनिष्ठिकाधृताखड्गं तेन पूतो भवेन्नरः ॥ २६ ॥
प्रयोगपारिजाते-उत्तरीयंयोगपट्टंतर्जन्यां रजतं तथा
नजीवेत्पितृकैर्धार्यं ज्येष्ठो वा विद्यते यदि।२७।इति.

अथाचमनविचारः ॥ ५ ॥ मनुः ।

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ॥
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥१॥

याज्ञवल्क्यस्मृतौ ।

अन्तर्जानुः शुचौदेश उपविष्ट उदङ्मुखः ॥

प्राग्वाब्राह्मेणतीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ २ ॥

बृहत्पाराशरौ ।

हस्तौचामणिबन्धान्तं पादौवाजानुतः शुची ॥
प्रक्षाल्याचा मयेद्विद्वानन्तर्जानुकरोद्विजः ॥
आचामेद्ब्रह्मतीर्थेन पुनराचामनाच्छुचिः ॥ ३ ॥

दक्षस्मृतौ ।

प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बुवीक्षितम् ॥ ४ ॥
वसिष्ठस्मृतौ । प्राग्वोदग्वासीनः प्रक्षाल्य पादौ
पाणी चामणिबन्धनात् ॥ अंगुष्ठमूलस्योत्तरतो-
रेखा ब्राह्मंतीर्थं तेन त्रिराचामेदशब्दवत् ॥ ब्रजं-
स्तिष्ठन् शयानः प्रणतोवा नाचामेत् ॥ ५ ॥

तीर्थमाह । मनुः ।

अंगुष्ठमूलस्यतले ब्राह्मं तीर्थं प्रचक्षते ॥
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ ६ ॥

याज्ञवल्क्यस्मृतौ ।

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ॥

प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ ७ ॥

बृहत्पाराशरौ ।

पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे ॥
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यं च सौमिकम् ॥८॥
ब्राह्मं पश्चिमलेखायां दैवमङ्गुलिमूर्धनि ॥
प्राजापत्यं कनिष्ठादौ मध्ये सौम्यं विजानत ॥९॥
अंगुष्ठस्य प्रदेशिन्यामध्ये पित्र्यं प्रतिष्ठितम् ॥
पितॄणां पितृतीर्थेन देवानां दैवकेन तु ॥१०॥

वसिष्ठस्मृतौ । अंगुलिकनिष्ठिकामूले दैवं तीर्थम् ॥ अंगुल्यग्रे मानुषम् ॥ पाणिमध्यआग्नेयम् ॥ प्रदेशिन्यंगुष्ठयोरन्तरा पित्र्यम् ॥ ११ ॥

आचमने उदकम् ॥ मनुः ।

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित् ॥
शौचेप्सुः सर्वदाचामदेकान्ते प्रागुदङ्मुखः ॥ १२ ॥
शंखस्मृ. अद्भिःसमुद्धृताभिस्तु हीनाभिःफेनबुद्बुदैः

वह्निना चाप्यतप्ताभिरक्षाराभिरुपस्पृशेत् ॥ १३॥
हृद्गाभिःपूयते विप्रःकण्ठगाभिश्च भूमिपः॥
तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः १४
मनुरपि-हृद्गाभिःपूयते विप्रःकण्ठगाभिस्तुभूमिपः
वैश्योऽद्भिःप्राशिताभिस्तुशूद्रःस्पृष्टाभिरन्ततः १५

याज्ञवल्क्योपि ।

हृत्कण्ठतालुगाभिस्तु यथा संख्यं द्विजातयः ॥
शुद्ध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः १६

आचमनाविधिः ॥ मनुः ।

त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततोमुखम् ॥
खानि चैव स्पृशेदद्भिरात्मानं शिरएव च ॥१७॥
वृ-पारा-अंगुष्ठेन प्रदेशिन्या सव्यपाणिस्थवारिणा॥
घ्राणं संस्पृश्य नेत्रे च ततोनामिकया श्रुती॥ १८॥
नाभिं च तत्कनिष्ठाभ्यां वक्षःकरतलेन च ॥
शिरः सर्वाभिरंसौ च अंगुल्यग्रैस्तु संस्पृशेत्॥ १९॥
शं-स्मृ-तर्जन्यंगुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥

अंगुष्ठमध्यायोगेन स्पृशेन्नेत्रद्वयं ततः ॥ २० ॥
अंगुष्ठानामिकायोगे श्रवणौ समुपस्पृशेत् ॥
कनिष्ठांगुष्ठयोगेन स्पृशेत्स्कन्धद्वयं ततः ॥ २१ ॥
सर्वासामेव योगेन नाभिं च हृदयं तथा ॥
संस्पृशेच्च तथा मूर्ध्नि एष आचमनेविधिः॥ २२॥
त्रिःप्राश्नीयाद्यदंभस्तु प्रीतास्तेनास्य देवताः॥
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः ॥ २३ ॥
गङ्गा च यमुना चैव प्रीयते परिमार्जनात्॥
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ २४ ॥
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ॥
कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ ॥ २५ ॥
स्कन्धयोःस्पर्शनादस्य प्रीयन्ते सर्वदेवताः॥
मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषोभवेत्॥ २६ ॥

आचमनमन्त्राः ॥ बृहत्पाराशरी ।

सूर्यश्चमेति मन्त्रेण प्रातराचमनं स्मृतम् ॥

आपः पुनन्तु मध्याह्ने सायमग्निश्चमेति च॥ २७॥

सव्यअपसव्यलक्षणम् ॥ मनुः ।

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ॥
सव्ये प्राचीनआवीती निवीतीकण्ठसज्जने॥ २८॥

आचमने निमित्तानि ॥ शंखस्मृतौ ।

कृत्वा मूत्रं पुरीषं वा स्नात्वा भोक्तुमनास्तथा ॥
भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वाचाम्भोऽवगाह्य च॥
रथ्यामाक्रम्य वाचामेद् वासोविपरिधाय च॥ २९॥
का-स्मृ-पित्र्यमन्त्रानुद्रवणआत्मालम्भेऽधमेक्षणे॥
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ ३० ॥
मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसम्भवे ॥
निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥ ३१ ॥

जलाभावे आचमनविधिः ॥ पाराशरौ ।

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ॥
पतितानांच संभाषे दक्षिणंश्रवणं स्पृशेत् ॥ ३२॥

अग्निरापश्च वेदाश्च सोमसूर्यानिलास्तथा ॥
एते सर्वेपि विप्राणां श्रोत्रे तिष्ठन्ति दक्षिणे ॥३३॥
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ॥
विप्रस्य दक्षिणे कर्णे सान्निध्यं मनुरब्रवीत्॥ ३४॥

श्रौतआचमनम् ॥ धर्मसिन्धौ । देव्यास्त्रयः पादा आपोहिष्ठेति नव पादाःसप्त व्याहृतयोदेवीपादत्रयं द्वेधाविभक्तं देवीशिरश्चेति चतुर्विंशति स्थानानि॥

विशेषविचारः ॥ बृहत्पाराशरौ ।

जले जलस्थआचामेत्स्थलस्थश्च स्थले शुचिः॥
पादौ स्थाप्योभयत्रैव आचांतःशुचितामियात् ३६
सव्यहस्तस्थिते दर्भे योद्विजः समुपस्पृशेत् ॥
असृक्पानेन तुल्यं च पीत्वा चान्द्रायणं चरेत्॥ ३७॥
आप.स्मृ.।उत्तीर्याचामेदुदकादवतीर्य उपस्पृशेत्॥
एवं तु श्रेयसा युक्तोवरुणेनाभिपूज्यते॥ ३८ ॥
गौतमस्मृतौ। न तिष्ठन् उद्धृतेनोदकेनाचामेत् ॥

शंख-विनायज्ञोपवीतेन तथा मुक्तशिखोद्विजः ॥
अप्रक्षालितपादस्तु आचांतोऽप्यशुचिर्भवेत् ॥ ३९ ॥
वहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ॥
सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ॥ ४० ॥

आचारादर्शे नरसिंहपुराणे ।

दक्षिणं तु करं कृत्वा गोकर्णाकृतिवत्पुनः ॥
त्रिः पिवेदीक्षितं तोयमास्यं द्विः परिमार्जयेत् ॥ ४१

तत्रैव देवलः ।

सोपानत्कोजलस्थोवा मुक्तकेशोऽपि वा द्विजः ॥
उष्णीषी वापि नाचामेद्वस्त्रेणोद्वेष्टच वा शिरः ॥ ४२
न गच्छन्न शयानश्च न चलन्न परान्स्पृशन् ॥
न हसन्नैव संजल्पन्नात्मानं चैव वीक्षयन् ॥ ४३ ॥
केशान्नीवीमधः कायमस्पृशन्धरणीमपि ॥
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करम् ॥ ४४ ॥
त. व्यासः ॥ शिरः प्रावृत्य कण्ठंवा मुक्तकक्षशिखोपिवा ।

अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥ ४५

तत्रैव गोभिलः ।

जानुभ्यामूर्द्ध्वमाचम्य जले तिष्ठन्न दुष्यति ॥

त. व्यासः । अपः पाणिनखाग्रेण आचामेद्यस्तु वै द्विजः

सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥ ४६ ॥

बौधा. त. । पादप्रक्षालनेनोच्छिष्टेन च नाचामेत् ॥

यद्याचामेत् किंचित्तु भूमौ स्रावयित्वाचामेत् ॥ ४७ ॥

आप. तत्रैव । न वर्षधारास्वाचामेत् । न विदीर्णभूभागः

प्रदरोदकेन न तप्ताभिश्चाकरणात् रोगादिव्यतिरिक्तेन

वृ. पा. । दक्षिणे च स्थितं तोयं तर्जन्यां सव्यपाणिनः

तत्तोयं संस्पृशेद्यस्तु सोमपानसमं स्मृतम् ॥ ४६ ॥

आह्निकसूत्रावलौ ॥ कात्यायनपरिशिष्टसूत्रे ।

दक्षिणेनोदकं पेयं दक्षं वामेन संस्पृशेत् ॥

तावन्न शुद्ध्यते तोयं यावद्वामो न युज्यते ॥ ५० ॥

तत्रैव नागदेवः।

संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः॥
मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् ॥ ५१॥
माषमात्रं सुवर्णस्य यत्र मज्जति वै मणिः॥
एतदाचमनं प्रोक्तं पवित्रं कायशोधनम् ॥ ५२ ॥
आह्निकका. ।कांस्यनायसपात्रेण त्रपुसीसकपित्तलैः
आचांतः शतकृत्वोऽपि न कदाचन शुद्ध्यति॥५३॥

तत्रैव वाचस्पतौ ।

शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥
मनुः।स्पृशन्ति विंदवःपादौ यआचामयतःपरान्॥
भौमिकैस्ते समाज्ञेया न तैराप्रयतोभवेत् ॥ ५४ ॥
सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानिच
पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्॥५५
कात्या.स्मृ.सदोपवीतिना भाव्यं सदा बद्धशिखेनच
विशिखोव्युपवीतश्च यत्करोति न तत्कृतम्॥५६॥
पैठीनसिः।जानुदघ्नजलेनद्या:स्तिष्ठन्नेवाचमेद्द्विजः

जानोरूर्ध्वंजले तिष्ठन्नाचान्तःशुचितामियात् ५७

अथ स्नानविचारः ॥ शंखस्मृतौ ।

नित्यं नैमित्तिकं काम्यं क्रियांगं मलकर्षणम् ॥
क्रियास्नानं तथा षष्ठं षोढास्नानं प्रकीर्तितम् ॥ १ ॥
अस्नातः पुरुषोऽनर्होजप्याग्निहवनादिषु ॥
प्रातःस्नानं तदर्थं च नित्यस्नानं प्रकीर्तितम् ।२।
चण्डालशवभूषाद्यं स्पृष्ट्वा स्नानं रजस्वलाम् ॥
स्नानानर्हस्तु यः स्नाति स्नानं नैमित्तिकं च तत् ३
पुष्यस्नानादिकं स्नानं दैवज्ञविधिचोदितम् ॥
तद्धि काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत् ॥ ४ ॥
जप्तुकामः पवित्राणि अर्चिष्यन् देवतान् पितॄन् ॥
स्नानंसमाचरेद्यस्तु क्रियांगं तत्प्रकीर्तितम् ॥ ५ ॥
मलाण्कर्षणार्थाय स्नानमभ्यंगपूर्वकम् ॥
मलापकर्षणार्थाय प्रवृत्तिस्तस्य नान्यथा ॥ ६ ॥
सरित्सु देवखातेषु तीर्थेषु च नदीषु च ॥

क्रियास्नानं समुद्दिष्टं स्नानं तत्र महाक्रिया॥ ७ ॥
तत्र काम्यं तु कर्तव्यं यथावद्विधिचोदितम्॥
नित्यं नैमित्तिकं चैव क्रियांगं मलकर्षणम् ॥ ८ ॥
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥
स्नानं तु वह्नितप्तेन तथैव परवारिणा ॥ ९ ॥
शरीरशुद्धिर्विज्ञाता न तु स्नानफलं लभेत् ॥
अद्भिर्गात्राणि शुद्ध्यन्ति तीर्थस्नानात्फलंभवेत् ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ॥
स्नानमेवक्रिया तस्मात्स्नानात्पुण्यफलं स्मृतम्॥ ११
तीर्थं प्राप्यानुषंगेण स्नानं तीर्थे समाचरेत् ॥
स्नानजं फलमाप्नोति तीर्थयात्राफलेन तु ॥ १२ ॥
सर्वतीर्थानि पुण्यानि पापघ्नानि सदा नृणाम्॥
परस्परानपेक्षाणि कथितानि मनीषिभिः ॥ १३॥
सर्वे प्रस्रवणाःपुण्याःसरांसि च शिलोच्चयाः॥
नद्यः पुण्यास्तथा सर्वा जाह्नवी तु विशेषतः॥ १४॥

यस्य पादौ च हस्तौ च मनश्चैव सुसंयतम् ॥
विद्या तपश्च कीर्तिश्च सतीर्थफलमश्नुते ॥१५॥
नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥१६॥

अथ क्रियास्नानविचारः। दक्षस्मृतौ।

प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्।
सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् ॥ १॥
मनुरपि। मैत्रं प्रसाधनं स्नानं दन्तधावनमंजनम्॥
पूर्वाह्णएव कुर्वीत देवतानांच पूजनम् ॥ २ ॥
वृ.पारा. आह्लादकारणंस्नानं दुःखशोकापहं तथा॥
दुःस्वप्ननाशनं चैव कार्यं स्नानमतः सदा ॥ ३ ॥

तत्रैव प्रातःस्नानफलम् ॥

उषस्युषसि यत्स्नानं क्रियतेनुदिते रवौ ॥
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥ ४ ॥
प्रातः स्नाति हि योविप्रः सोर्हः स्यात् सर्वकर्मसु॥
प्राप्नोति तत्कृतं पुण्यं सर्वं च स्याद्यथार्थवत् ॥५॥

उत्साहाप्यायनं स्वान्तं प्रसत्तिशक्तिवृद्धिकम्।।
कीर्तिकान्तिवपुःपुष्टिसौभाग्यायुः प्रवर्धनम् ।।६ ॥
स्वर्ग्यं च दशभिर्युक्तं गुणैः स्नानं प्रशस्यते।।
दक्षस्मृ०।प्रातरुत्थाययोविप्रःप्रातःस्नायी भवेत्सदा
सप्त जन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ ७ ॥

गुणादशस्नानपरस्य साधो,रूपं च पुष्टिश्च बलं च तेजः ॥ आरोग्यमायुश्च मनोनुरुद्ध, दुःस्वप्नघातुश्च तपश्चमेधाः ।। ८ ॥

प्रातःस्नानाभावे दोषः ॥ दक्षवृहत्पाराशरौ ।

अस्नात्वा नाचरेत्कर्म जपहोमादि किंचन ॥
क्लिद्यन्ते हि सुगुप्तानि इन्द्रियाणि क्षरन्ति च॥९॥
अंगानि समतां यान्ति उत्तमान्यधमैः सह ॥
अत्यन्तमलिनः कायोनवच्छिद्रसमान्वितः ॥
श्रवत्येषदिवारात्रौ प्रातःस्नानं विशोधनम् ।१०।

याज्ञवल्क्यः ।

स्नानमूलाः क्रियाः सर्वाः स्मृतिश्रुत्युदिता नृणाम्

तस्मात्स्नानं निषेवेत्तश्रीपुष्ट्याऽरोग्यवर्धनम् ११

स्नानयोग्यजलमाह ॥ हारीतस्मृतौ ।

नद्यांतु विद्यमानायां न स्नायादन्यवारिणि ॥
न स्नायादल्पतोयेषु विद्यमाने बहूदके ॥ १२ ॥
सरिद्वरं नदीस्नानं प्रतिस्रोतः स्थितश्चरेत् ॥
तडागादिषु तोयेषु स्नायाच्च तदभावतः ॥१३॥
बृ.पारा.कदाचिद्विदुषा मत्या न स्नातव्यं पराम्भसा
अम्बुकृद्दुष्कृतांशेन स्नानकर्ता विलिप्यते॥१४॥
सप्त वा पञ्च वा पिण्डान् स्नायादुद्धृत्य तत्र तु॥
वृथा स्नानादिकानीह विशेषेण विवर्जयेत्॥१५॥
उद्धृताभिरपि स्नायादाहृताभिर्द्विजातिभिः॥
स्वभावाभिरनुष्णाभिः सहेमाभि स्तथा द्विजाः ॥
नवाभिर्निर्दशाहाभि रसंस्पृष्टाभिरन्त्यजैः॥ १६॥
व्यासः।सरित्सरःसु वापीषु गतप्रस्रवणादिषु ॥
स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारिणा॥

तीर्थाभावेऽप्यशक्तोवा स्नायात्तोयैःसमाहृतैः॥१७

अत्रिः।श्रवद्यं ब्राह्मणं तोयं रहस्यं क्षत्रियं तथा ॥

वापीकूपे तु वैश्यस्य शौद्रं भाण्डोदकं तथा॥१८॥

गृहाद्दशगुणं कूपं कूपाद्दशगुणं तटम् ॥

तटाद्दशगुणं नद्यां गङ्गासख्या न विद्यते॥ १९॥

शातातपः।अमावस्यां भवेद्वारो यदा भूमिसुतस्यवै

जाह्नवीस्नानमात्रेण गोसहस्रफलं भवेत् ॥२०॥

अमा वै सोमवारेण रविवारेण सप्तमी ॥

चतुर्थी भौमवारेण विषुवत् सदृशं फलम् ॥ २१ ॥

लिखि.स्मृ.यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ २२ ॥

स्नाने वर्ज्यभावाः ॥ बृहत्पाराशरी ।

न तीर्थे स्त्र्याकुले स्नायान्नासज्जनसमाकुले ॥

दर्भहीनोन्यचित्तश्च न नग्नोन शिरोविना॥२३॥

न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा पुनः ॥२४॥

धर्मसिन्धौ। एकनद्यां स्नाने अन्यांनदीं न स्मरेत॥
यच्च श्मश्रुषु केशेषु यज्जलं देहरोमसु॥
न हस्ताभ्यान्न वस्त्रेण जलं विद्वान्प्रमार्जयेत्॥२५
मार्जिते पितरस्तोये सर्वाअपि हि देवताः॥
तथा सर्वे मनुष्याश्च त्यजन्त्यह्लायतं द्विजम्॥२६॥

महाभारते।

न नग्नः कर्हिचित्स्नायान्न निशायां कदाचन॥
स्नात्वा नावमृज्येत गात्राणि सुविचक्षणः॥२७॥
न चानुलिंपेदस्नात्वा स्नात्वा वासोन निर्धुनेत्॥
नग्नलक्षणमाह धर्मसिन्धौ॥ द्विगुणवस्त्रोदग्धवस्त्रः स्यू-
तग्रथितवस्त्रः काषायवस्त्रादयोदिगम्बरश्चनग्नाः २८

निशालक्षणमाह॥ लघुपाराशरौ।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्॥
प्रदोषपश्चिमौ यामौ दिनवत्स्नानमाचरेत्॥ २९॥

आह्निकसूत्रावलौ। नागदेवः।

जटिलस्य शिरोरोगिणश्चाकण्ठमज्जनं स्नानम्३॥

लघुपाराशरी ।

अवधुनोति यः केशान् स्नात्वा प्रस्नवते द्विजः ॥
आचामेद्वा जलस्थोपि वाह्यः स पितृदेवतैः ॥ ३१

उष्णोदकस्नाननिषेधः ॥ वृहत्पाराशरी ।

वृथैवोष्णोदकस्नानं वृथा जाप्यमवैदिकम् ॥
अश्रोत्रिये वृथा दानं वृथा भुक्तमसाक्षिकम् ॥ ३२ ॥
रविसङ्क्रान्तिवारेषु ग्रहणे च शशिक्षये ॥
व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥ ३३ ॥
वृद्धमनुः।संक्रान्त्यांरविवारे च सप्तम्यां राहुदर्शने
आरोग्ये पुत्रमित्रार्थे न स्नायादुष्णवारिणा ॥ ३४ ॥
मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ॥
अस्पृष्टस्पर्शने चैव नस्नायादुष्णवारिणा ॥ ३५ ॥

स्नानादौ वर्ज्यजलम् ॥ वृहत्पाराशरी ।

न स्नायात्क्षुभितास्वप्सु न स्वयं क्षोभयेच्चताः ॥
न निर्गतासु तीर्थाच्च पतन्तीष्वाहतासु च ॥ ३६ ॥
कात्या०स्मृ०मासद्वयं श्रावणादि सर्वानद्योरजस्वलाः

तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥३७॥
धनुः सहस्राण्यष्टौ तु गतिर्यासां न विद्यते ॥
न तानद्यः शब्दवहागर्तास्ताः परिकीर्तिताः ॥३८
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ॥
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥३९॥

आह्निकसूत्रावलौ ॥ धन्वन्तरिः ।

तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥
योऽवगाहेत वर्षासु पिवेद्वापि नवं जलम् ॥
सवाह्याभ्यन्तरान् रोगान्प्राप्नुयात्क्षिप्रमेव हि ४०॥

तत्रैव वाचस्पतौ ।

स्नानमाचमनं दानं देवतापितृतर्पणम् ॥
शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः॥ ४१॥
यमः।अन्त्यजैः खानिताः कूपास्तडागानि तथैव च॥
एषु स्नात्वा च पीत्वा च पंचगव्येन शुद्ध्यति। ४२॥

वृद्धशातातपः ।

अन्त्यजैः खानिते कूपे सेतौ वाप्यादिके तथा ॥
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ४३

एतद्वचनद्वयमापद्नापद्विषयकमिति ।

अत्रिस्मृ.।स्नानं दानं जपं होमं भोजनं देवतार्चनम्॥

प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥४४॥

आचारादर्शे बौधायनः ।

आसनारूढपादस्तु जानुनोर्जंघयोस्तथा ॥

कृतावसिक्थिकोयश्च प्रौढपादः सउच्यते ॥४५॥

ग्रन्थान्तरे।स्नाने दाने जपेहोमे सन्ध्यायां देवतार्चने

शिखाग्रन्थि विनाकर्म न कुर्याद्वै कदाचन ॥४६॥

स्नाने कालदिग्विचारः॥ आचारादर्शे विष्णुः ।

प्रातःस्नायरुणकरग्रस्तां प्राचीमवलोक्य स्नायात्

तत्रैव योगियाज्ञवल्क्यः ।

उभे सन्ध्ये च स्नातव्यं ब्राह्मणैर्गृहमाश्रितैः ॥

तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विना ४८

आह्निक० ।

घटिका द्वयावशिष्टायां रात्र्यां गच्छेज्जलाशये॥

तिलगन्धाक्षतापुष्पैर्दर्भाद्यैः सहितः शुचिः ॥४९॥

प्रातर्मध्याह्नयोःस्नानं वानप्रस्थगृहस्थयोः ॥
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥५०॥
अत्रिः। प्रवाहे सन्मुखेस्नानं तडागेरविदर्शनम्॥
वापीकूपे तु पूर्वमुखे गृहमध्ये तु उत्तरम् ॥ ५१ ॥
रेणुः। याया: समुद्रगानद्यस्तासु स्नानं तु सन्मुखम्।
सर्वेषां शाखिनामेवं विना वाजसनेयिनः ॥५२॥

प्रत्यक्षस्नानाभावे गौणस्नानानि ॥ वृहत्पाराशरौ।

मन्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च ॥
वारुणं मानसं चेति सप्तस्नानान्यनुक्रमात् ॥५३॥
शन्नआपस्तु वै मन्त्रं मृदालम्भं तु पार्थिवम् ॥
भस्मना स्नानमाग्नेयं गवां रेणुभिरानिलम्॥५४॥
आतपे सति या वृष्टिस्तद्दिव्यं स्नानमुच्यते ॥
बहिर्नद्यादिके स्नानं वारुणं तत्प्रकीर्तितम् ॥५५॥
यद्ध्यानं मनसा विष्णोर्मानसं कथ्यते बुधैः॥
असामर्थ्येनुकायस्य कालशक्त्याद्यपेक्षया ॥५६॥
सर्वाणि फलतुल्यानि स्युरित्याह पराशरः ॥

लघुव्याससंहितायाम् ।

आर्द्रेण वाससा चाङ्गमार्जनं कपिलं स्मृतम्॥
अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत् ॥५७॥

धर्मसिन्धौ। गौणस्नानैर्जपसन्ध्यादौ शुद्धिर्न तु श्राद्धदेवार्चनादौ ब्रह्मयज्ञे विकल्पः ॥

स्नाने मृत्तिकालेपनम् ॥ बृहत्पाराशरौ ।

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे॥
मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ॥५८॥
समालभेत्त्रिभिर्मन्त्रैरिदं विष्णवादिभिर्द्विजः ॥
शिरश्चांसावुरश्चोरू पादौ जंघे क्रमेण तु ॥५६॥
भास्कराभिमुखोमज्जेदापोअस्मानिति त्रिभिः॥
उन्मृज्य सर्वगात्राणि मज्जेच्च पुनः पुनः॥६०॥

अथ संक्षेपतः स्नानविधिः ॥ धर्मसिन्धौ ।

नद्यादौ गत्वा शिखां वध्वा जानूर्ध्वजले तिष्ठन्नन्यथा तूपविश्याचम्य मम कायिकवाचिकमानसिकदोषनिरसनपूर्वकं सर्वकर्मसु शुद्धिसि-

द्ध्यर्थं प्रातःस्नानं करिष्ये इति संकल्प्य जलं न-
त्वा प्राङ्मुखः प्रवाहाभिमुखोवा त्रिरवगाह्यांगा-
नि निमृज्य स्नात्वा द्विराचम्यापोहिष्ठेति मार्जनं
कृत्वा इमं मे गङ्गे इति त्रिर्जलमालोड्याघमर्षणं
त्रिरावृतेन ऋतं चेति सूक्तेन कात्यायनैर्द्रुपदेति
ऋचाजलनिमग्नतया कृत्वा प्लुत्याचम्य जलत-
र्पणं कुर्यान्न वा ॥

गृहेस्नानविचारः। कात्यायनः। गेहे चेत्तदमंत्रवत् ।

धर्मसिन्धौ । अथ गृहे उष्णोदकेन स्नानं न तु
शीतोदकेन ॥ तद्विधिश्च पात्रे शीतोदकं प्रक्षिप्य
तदुपरि उष्णोदकेनापूर्य शंनोदेवी॰ आपःपुनंतु॰
द्रुपदादिवो॰ ऋतंच॰ आपोहिष्ठेति पञ्चभिर्ऋ-
ग्भिरभिमन्त्र्य इमंमे इत्यादिना तीर्थानि
स्मरन् स्नायात् गृहस्नाने संकल्प आच-
मनं अघमर्षणं तर्पणं च न, अंते आचमनं
मार्जनं च कार्यं एवं स्नात्वा वस्त्रेण पाणिना वा

जलापनयनमकृत्वा शुष्कं शुभ्रकार्पासवस्त्रं परिधाय स्नानार्द्रवस्त्रमूर्ध्ववत् उत्तारयेत् ॥ विकच्छोनुत्तरीयश्चानग्नश्चावस्त्रएव च।श्रौतस्मार्तंनैव कुर्यात् उत्तरीयं जीवत्पितृकजीवज्ज्येष्ठभ्रातृकैर्नधार्यम् ॥

आह्निकसूत्रावलौ ॥ तीर्थप्रार्थना ।

नमामि गङ्गे तव पादपङ्कजं, सुरासुरैर्वन्दितदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यं, भावानुसारेण सदा नराणाम् ॥ १ ॥

पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ॥
आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥ २ ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ॥
नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ३

अथतीर्थस्नानविचारः ॥ महाभारते ।

अगाधे विमले शुद्धे सत्यतोये धृति ह्रदे ॥
स्नातव्यंमानसे तीर्थे सत्वमालंब्य शाश्वतम् ॥ १ ॥

तीर्थशौचमनार्थित्वमार्जवं सत्यमार्दवम् ॥
अहिंसा सर्वभूतानामानृशंस्यं दमःशमः॥ २ ॥
निर्ममानिरहंकारानिर्द्वन्द्वानिष्परिग्रहाः ॥
शुचयस्तीर्थभूतास्ते ये भैक्ष्यमुपभुंजते ॥ ३ ॥
तत्त्वविक्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते ॥
नोदकाक्लिन्नगात्रस्तु स्नातइत्याभिधीयते ॥
सस्नातोयोदमस्नातः सवाह्याभ्यन्तरःशुचिः ॥४॥
मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च ॥
स्नाति योमानसे तीर्थे तत्स्नानं तत्त्वदर्शिनः ॥५॥
पाराशरः। चिद्रूपं परमं ज्योतिर्निरालंवमनामयम्॥
अव्यक्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरन्॥६॥
गायत्रीवारिसंस्नातः पणवैर्निर्मलीकृतः ॥
विष्णुस्मरणसंशुद्धोयोग्यः सर्वेषु कर्मसु ॥ ७ ॥
योधीतवेदवेदार्थः स्नातः सर्वेषु वारिषु ॥
न शुद्ध्येदशुचिस्वांतस्तच्छुद्धस्तु शुचिर्यतः ॥८॥
कपिलगी॰इदंतीर्थमिदं तीर्थं भ्रमन्ति तामसाजनाः

आत्मतीर्थं न जानन्ति कथं मोक्षः शृणु प्रिये॥ ९॥

आत्मबोधे। दिग्देशकालाद्यनपेक्षिसर्वगं, शीतादिहृन्नित्यसुखं निरञ्जनम्॥ यः स्वात्मतीर्थं भजते विनिष्क्रियः, ससर्ववित्सर्वगतोऽमृतोभवेत् १०

प्रश्नोत्तरा०। तीर्थं परं किं स्वमनोविशुद्धमिति॥

उत्तरगी०। निमिषं निमिषार्धं वा यत्रतिष्ठन्तियोगिनः तत्र तत्र कुरुक्षेत्रं प्रयागोनैमिषं वनम्॥ ११॥

नीतिः। साधूनां दर्शनं पुण्यं तीर्थभूताहिसाधवः॥ कालेन फलते तीर्थं सद्यः साधुसमागमः॥१२॥

विश्वेश्वरौ० तपस्तीर्थंक्षमातीर्थं तीर्थमिन्द्रियनिग्रहः सर्वभूतदयातीर्थं ध्यानतीर्थमनुत्तमम्॥१३॥

एतानि पञ्च तीर्थानि सत्यं षष्ठं प्रकीर्तितम्॥

देहे तिष्ठन्ति सर्वस्य तेषु स्नानं समाचरेत्॥१४॥

न तथा पुष्करे स्नात्वा गङ्गायां कुरुजांगले॥

मुच्यते पुरुषः पापाद्यथा स्नाते क्षमादिषु॥१५॥

सर्वंब्रह्मेति योवेत्ति न तीर्थं तस्य किंचन॥

जाग्रत्स्वप्नसुषुप्तेषु ब्रह्मण्येव सवर्तते ॥ १६ ॥
इदं तीर्थमिदं नेति येनराभेददर्शिनः ॥
तेषां विधीयते तीर्थगमनं तत्फलानि च ॥ १७॥
व्यासस्मृ. मातापितरोपरं तीर्थं गङ्गागावोविशेषतः
ब्राह्मणात्परमं तीर्थं न भूतं न भविष्यति ॥१८॥

महाभारते ॥ अथपुष्करम् ।

दशकोटिसहस्राणि तीर्थानां वै महामते ॥
सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन॥१९॥
आदित्यावसवोरुद्राःसाध्याश्च समरुद्गणाः॥
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिताविभो ॥२०॥
तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः ॥
अश्वमेधाद्दशगुणं फलं प्राहुर्मनीषिणः ॥ २१ ॥
ब्राह्मणाः क्षत्रियावैश्याः शूद्रावा राजसत्तम ॥
न वै योनौ प्रजायन्ते स्नातास्तीर्थे महात्मनः २२
कार्तिकीं तु विशेषेण योऽभिगच्छति पुष्करम् ॥
प्राप्नुयात्सनरोलोकान् ब्रह्मणःसदनेऽक्षयान् २३

जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषेण वा ॥
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ॥ २४ ॥
नैमिषं ततस्तु नैमिषं गच्छेत्पुण्यं सिद्धिनिषेवितम्
तत्र नित्यं निवसति ब्रह्मा देवगणैः सह ॥ २५ ॥
नैमिषं मृगयाणस्य पापस्यार्धं प्रणश्यति ॥
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥ २६ ॥
पृथिव्यां यानि तीर्थानि तानि तीर्थानि नैमिषे ॥
कृताभिषेकस्तत्रैव नियतोनियताशनः ॥ २७ ॥
गवां मेधस्य यज्ञस्य फलं प्राप्नोति भारत ॥
पुनात्यासप्तमं चैव कुलं भरतसत्तम ॥ २८ ॥
यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः ॥
समोदेत्सर्वलोकेषु एवमाहुर्मनीषिणः ॥ २९ ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ॥
यएवं सततं ब्रूयात्सर्वपापैः प्रमुच्यते ॥ ३० ॥
पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ॥
अपि दुष्कृतकर्माणं न यान्ति परमां गतिम् ॥ ३१ ॥

दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ॥
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ॥ ३२॥
तत्र मासं वसेद्धीरः सरस्वत्यां युधिष्ठिर ॥
यत्र ब्रह्मादयोदेवाऋषयः सिद्धचारणाः॥ ३३॥
गन्धर्वाप्सरसोयक्षाः पन्नगाश्च महीयते ॥
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥३४॥
मनसाऽप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ॥
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति॥३५॥
प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो ॥
गमनात्तस्य तीर्थस्य नामसंकीर्तनादपि ॥
मृत्युकालभयाच्चापि नरः पापात्प्रमुच्यते ॥ ३६॥
दश तीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः ॥
येषां सान्निध्यमत्रैव कीर्तितं कुरुनन्दन ॥३७॥
चतुर्विद्ये च यत्पुण्यं सत्यवादिषु चैव यत् ॥
स्नातएव तदाऽऽप्नोति गङ्गायमुनसंगमे ॥३८॥
कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता ॥

विशैषोवै कनखले प्रयागे परमं महत् ॥३६॥
स्वर्गद्धारेण यत्तुल्यं गङ्गाद्धारं न संशयः ॥
तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः ॥४०॥
पुण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् ॥
उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ॥४१॥
ततः कनखले स्नात्वा त्रिरात्रोपोषितोनरः॥
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति॥४२॥
पुनाति कीर्तितापापं दृष्ट्वा भद्रं प्रयच्छति॥
अवगाढा च पीता च पुनात्यासप्तमं कुलम्॥४३॥
यावदस्थिमनुष्यस्य गङ्गायाः स्पृशते जलम्॥
तावत्सपुरुषोराजन् स्वर्गलोके महीयते ॥४४॥
यद्यकार्यशतं कृत्वा कृतं गङ्गावसेचनम् ॥
सर्वं तत्तस्य गङ्गापोदहत्यग्निरिवेन्धनम् ॥४५॥
सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ॥
द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ॥४६॥
न गङ्गासदृशं तीर्थं न देवः केशवात्परः ॥

ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥४७॥
यत्र गङ्गा महाराज सदेशस्तत्तपावनम् ॥
सिद्धिक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥४८॥

अथ समुद्रस्नानविचारः । आश्वलायनः ।

समुद्रे पर्वसु स्नायादमायां च विशेषतः ॥
पापैर्विमुच्यते सर्वैरमायां स्नानमाचरन् ॥
भृगुभौमदिने स्नानं नित्यमेव विवर्जयेत् ॥४९॥
भारते।अश्वत्थसागरौ सेव्यौ न स्पृष्टव्यौ कदाचन॥
अश्वत्थं मन्दवारे तु सागरं पर्वणि स्पृशेत् ॥५०॥
न कालनियमः सेतौ समुद्रस्नानकर्मणि ॥

परार्थस्नानविधिः ॥ अत्रिस्मृतौ ।

प्रतिनिधिं कुशमयं तीर्थवारिषु मज्जति ॥
यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः ॥५१॥
मातरं पितरं वापि भ्रातरं सुहृदं गुरुम् ॥
यमुद्दिश्य निमज्जेत द्वादशांशफलं भवेत् ॥५२॥इति

अथ धौतवस्त्रनिष्पीडनादिविचारः । बृहत्पाराशरौ ।
निष्पीडयति यः पूर्वं स्नानवस्त्रमबुद्धिमान् ॥
निराशाःपितरस्तस्य यन्ति देवाःसहर्षिभिः॥ १ ॥
निष्पीडयेत्स्नानवस्त्रं तिलदर्भसमन्वितम् ॥
न पूर्वं तर्पणाद्वस्त्रं न चाम्भसि न पादयोः॥ २ ॥
एषुचेत्पीडयेद्वस्त्रं राक्षसानां फलं भवेत् ॥
वस्त्रनिष्पीडने विप्रइमं श्लोकमुदीरयेत् ॥ ३ ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः॥
तेषां प्रदत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ ४ ॥
पितृवंशे मृता ये च मातृवंशे कुमृत्युना ॥
तेषां तृप्तिर्भवत्वेषां तिलमिश्रेण वारिणा ॥ ५ ॥
जलमध्ये तु यः कश्चिद्ब्राह्मणोज्ञानदुर्बलः॥
निष्पीडयाति चेद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥ ६ ॥
शंखस्मृ.।उदकस्याप्रदानाच्च स्नानशाटीं न पीडयेत्
व्यासस्मृ.अतर्पितेषु पितृषु वस्त्रं निष्पीडयेच्च यः॥

निराशाः पितरस्तस्य भवन्ति सुरमानुषैः ॥ ८ ॥

धर्मसिन्धौ । द्विगुणवस्त्रोदग्धवस्त्रः स्यूतग्रथितवस्त्रः काषायवस्त्रादयोदिगम्बरश्च नग्नाः ॥ निष्पीडितं वस्त्रं न स्कन्धे क्षिपेत् ॥ चतुर्गुणीकृत्य वस्त्रं गृहेऽधोदशं नद्यामूर्ध्वदशं स्थले निष्पीडयेत्॥ न तु त्रिगुणम् ॥ ९ ॥

प्र.पारि.स्नानं कृत्वार्द्रवस्त्रं तु ऊर्ध्वमुत्तारयेद्द्विजः॥ आर्द्रवस्त्रमधस्ताच्चेत्पुनः स्नानेन शुद्ध्यति ॥१०॥

स्मृत्यन्तरे.वस्त्रं चतुर्गुणीकृत्य पीडयेच्च जलाद्बहिः वामप्रकोष्ठे निःक्षिप्य द्विराचम्य शुचिर्भवेत्॥११॥

आर्द्रशुष्कविचारः॥ बृहत्पाराशरौ ।

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ॥
कुर्याद्धोमं जपं दानं तत्सर्वं निष्फलं भवेत् ॥१२

आचारादर्शे ॥ व्यासः ।

आर्द्रवासाश्च यः कुर्याज्जपं होमं प्रतिग्रहम् ॥
सर्वं तद्राक्षसं विन्द्याद्बहिर्जानु च यत्कृतम्॥१३॥

वर्ज्यवस्त्राणि ॥ बृहत्पाराशरी ।

न जीर्णनीलकाषायमांजिष्ठेन तु वाससा ॥
मूत्राद्युपहतेनैव शुचिः स्यान्नैकवाससा ॥१४॥

आचारादर्शे ॥ नृसिंहपुराणे ।

मलाक्तं च दशाहीनं वर्जयेदम्बरं बुधः ॥
त.विष्णुः न प्रक्षालितं पूर्वधृतं वा वासो विभृयात् १५
आ.सू.दक्षः ईषद्धौतं स्त्रियाधौतं शूद्रधौतं तथैव च
प्रसारितं यमदिशि गर्हितं सर्वकर्मसु ॥ १६ ॥

तत्रैव आपस्तम्बः ।

न स्यूतेन न दग्धेन पारक्येण विशेषतः ॥
मूषकोत्कीर्णजीर्णेन कर्म कुर्याद्विचक्षणः ॥ १७॥

तत्रैव विष्णुपुराणे।

होमदेवार्चनाद्यासु क्रियासु पठने तथा॥
नैकवस्त्रः प्रवर्तेत द्विजो नाचमने जपे ॥ १८ ॥

आचारादर्शे वौधायनः ।

कषायवासाः कुरुते जपहोमप्रतिग्रहान् ॥

न तद्देवागमं भवति हव्यं कव्यमथाहविः॥ १६॥

बृहत्पाराशरी ॥ ग्राह्यवस्त्राणि ।

अव्यंगाक्लिष्टधौते तु विद्धाच्छुक्ले च वाससी॥
परिधाय मृदम्बुभ्यामूरूपादौ च मार्जयेत् ॥२०॥
तद्वाससोरसंपत्तौ शाणक्षौमाविकानि तु ॥
कुतपं योगपट्टं वा द्विवासास्तु यथा भवेत् ॥२१॥

पारस्करगृह्यसूत्रे। अहतं वासोधौतं वामैत्रेणा-च्छादयीत । परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि॥ शतं च जीवामि शरदः पुरूची-रायस्पोषमभिसंव्यायिष्य इति ॥ २२ ॥

तत्रैव हरिहरभाष्ये।अहतं नवं सदशंपवित्रं वासः वसनं आच्छादयीतपरिदध्यात् तदलाभे अमैत्रेण अरजकेण धौतं क्षालितं परिधास्या इत्यादिना अभिसंव्यायिष्य इत्यनेन मन्त्रेण॥ २३ ॥

आह्निकसूत्रावली ॥ देवलः ।

स्वयं धौतेनर्तव्याः क्रियाधर्माविपश्चिता॥

न तु नेजकधौतेन नाहतेन च कर्हिचित् ॥ २४ ॥
याज्ञव.। अष्टहस्तं नवं श्वेतं सदशं नान्यधारितम् ॥
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ २५ ॥
सत्यातपः। अहतं यन्त्रानिर्मुक्तमुक्तं वासः स्वयम्भुवा।
शस्तं माङ्गलिकेष्वेतत्तावत्कालं प्रकीर्तितम् २६

आचारादर्शे ॥ पराशरः ।

स्नात्वा निवस्य वासोन्यज्जंघे प्रक्षालयेन्मृदा ॥
अपवित्रीकृते वै तु कौपीनच्युतवारिणा ॥ २७ ॥

आ० सू० ॥ याज्ञवल्क्यः ।

वामकुक्षौ च नाभौ च पृष्ठे चैव यथाक्रमम् ॥
त्रिकच्छेन समायुक्तो द्विजोऽसौ मुनिरुच्यते २८

धौतवस्त्रप्रसारणम् ॥ तत्रैव शातातपः ।

प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ॥
दक्षिणाग्रं पश्चिमाग्रं पुनः प्रक्षालनं भवेत् ॥ २९ ॥
लिखि. स्मृ. मार्जनीरजसीसक्ते स्नानवस्त्रघटोदके।
नवाम्भसि तथा चैव हन्ति पुण्यं दिवाकृतम् ॥ ३० ॥

आह्निकसूत्रावलौ मनुः ।

काकस्पृष्टानिवस्त्राणि प्रोक्षितानि शुचीनि हि ॥
प्रोक्षणाद्भूमिशुद्धिः स्याद्वाससामपि सर्वदा ॥ ३१ ॥
योगी।प्रोक्षणेनैव शुद्धिः स्याद्दुकूले चैव कम्बले॥
प्रक्षालनेन वस्त्रस्य सम्पर्के सूतके रजे ॥ ३२ ॥
धौमिः।वीर्यस्पृष्टं शवस्पृष्टं स्पृष्टं मूत्रपुरीषयोः ॥
रजस्वलादिसंस्पृष्टमाविकं तु सदा शुचि॥ ३३ इति

अथ तिलकधारणम् ॥ आ० सू० ब्रह्मोत्तरखण्डे ।

स्नानं सन्ध्यापञ्चयज्ञान् पैत्रं होमादिकर्म यः॥
विना तिलकदर्भाभ्यां कुर्यात्तन्निष्फलं भवेत्॥ १ ॥
नागदे०।न पादुकास्थोनादर्शे न जले वा विलोकयेत्
न प्रावृत्ताशिरः कुर्यात्तिलकं धर्मवर्धनम् ॥ २ ॥
प्रभाते विपुलं बिन्द्यान्मध्याह्ने च त्रिपुण्ड्रकम् ॥
अपराह्णे पर्वमात्रं तिलकं त्रिविधं स्मृतम् ॥ ३ ॥

स्मृतिरत्नावल्याम् ।

ललाटे हृदये नाभौ गलेंऽसे वाहुसन्धिषु ॥
पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेत् ॥ ४ ॥

अतिस्वल्पमनायुष्यमतिदीर्घं तपः क्षयन् ॥
नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः ॥५॥
षडङ्गुलप्रमाणेन ब्राह्मणानां त्रिपुण्ड्रकम् ॥
नृपाणां चतुरङ्गुल्यं वैश्यानां द्व्यङ्गुलं मतम्॥
शूद्राणामथ सर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम् ॥६॥
का.खं.।भ्रुवोर्मध्यं समारभ्य यावदन्तोभवेद् भ्रुवोः॥
मध्यमाऽनामिकाङ्गुल्योर्मध्ये तु प्रतिलोमतः॥
अङ्गुष्ठेन कृता रेखा त्रिपुण्ड्रः सोभिधीयते ॥७॥
ब्रह्माण्डे। ललाटेकेशवं विन्द्यान्नारायणमथोदरे ॥
माधवं हृदये न्यस्य गोविन्दं कण्ठकूर्परे ॥८॥
विष्णुं च दाक्षिणे कुक्षौ तद्भुजे मधुसूदनम् ॥
त्रिविक्रमं कर्णमूले वामकुक्षौ तु वामनम् ॥९॥
श्रीधरं च हृषीकेशं वामयोर्बाहुकर्णयोः ॥
पद्मनाभं पृष्ठदेशे ककुद्दामोदरं न्यसेत् ॥१०॥
मूर्ध्नि मूलेन मन्त्रेण शेषे द्वादश नामभिः ॥
सङ्कर्षणादिभिः कृष्णे शुक्ले चेत्केशवादिभिः ११

भस्मधारणम् ॥ पारस्करगृह्यसूत्रे ।

भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति प्रतिमन्त्रेण ॥ १२ ॥

भस्मधारणमन्त्रः ॥ जाबालोपनिषदि ।

अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वंह वा इदं भस्म मनएतानि चक्षूंषि भस्मानि ॥ १३ ॥ इति ॥

धर्मसिन्धौ । जलमिश्रितेन मध्यमाङ्गुलित्रय-गृहीतेन ललाटहृदयनाभिगलांसबाहुसन्धिपृष्ठ-शिरःस्थानेषु शिवमन्त्रेण नारायणाष्टाक्षरेण वा गायत्र्या वा प्रणवेन वा त्रिपुण्ड्रात् कुर्यात् ॥ १४ ॥
तत्रैव । श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ॥
भस्म त्रिपुण्ड्रैः पूतात्मा मृत्युं जयति मानवः १५
आ.सू. प्रातः सलिलं भस्म मध्याह्ने गन्धमिश्रितम् ॥
सायाह्ने निर्जलं भस्म एवं भस्म विलेपयेत् ॥ १६ ॥
ब्राह्मे । गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः ॥

विभर्ति सोऽर्कस्य तेजस्तमोनाशाय केवलम्॥ १७॥
का. ख. । आग्नेय्यमुच्यते भस्म दग्धगोमयसम्भवम्॥
तदेव द्रव्यमित्युक्तं त्रिपुण्ड्रस्य महामुने॥ १८॥
संग्रहे। अग्निहोत्राग्निजं भस्म विरजा होमजं तथा॥
औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥ १९ ॥
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा ॥
शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥ २० ॥
प्र. पारि. । मृद्भस्म चन्दनं प्रोक्तं तोयं चैव चतुर्थकम्॥
स्नात्वा पुण्ड्रं मृदा कुर्यात्प्रक्षाल्यैव तु भस्मना ॥
देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु ॥ २१ ॥

कात्यायनः ।

ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् ॥
उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु ॥ २२ ॥
प्र. पारि. । धार्यं भस्म त्रिपुण्ड्रं तु गृहिणां जलसंयुतम्
सर्वकालं भवेत्स्त्रीणां यतीनां जलवर्जितम् ॥ २३॥

वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा॥
मध्याह्नात्प्रागजलैर्युक्तं परतोजलवर्जितम्॥२४॥
मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य च ॥
त्रिपुण्ड्रं धारयेद्विद्वान् सर्वकल्मषनाशनम्॥ २५ ॥
ललाटे तिलकं कृत्वा सन्ध्याकर्म समाचरेत् ॥
अकृत्वा भालतिलकं तस्य कर्म निरर्थकम् ॥२६॥

अथ सन्ध्याविचारः॥ सन्ध्याव्याख्या बृहत्पाराशरौ ।

दिवसस्य च रात्रेश्च सन्धिः सन्ध्येति गीयते ॥
मध्याह्नेपि च सन्धिः स्यात्पूर्वस्याह्नोऽपरस्य च॥
पूर्वाह्णाह्नोऽपराह्णश्च क्षपा चेति श्रुतिक्रमः॥१॥

आ० सू० नागदेवः ।

अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः ॥
सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः

सन्ध्याऽभावे दोषः ॥ वृ० पा० ।

सन्ध्या येन न विज्ञाता न च सन्ध्या उपासिता॥
सजीवन्नपि शूद्रः स्यात् सदा पातकसंयुतः॥३॥

का. स्मृ. एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति
यस्य नास्त्यादरस्तत्र न सब्राह्मणउच्यते ॥ ४ ॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥
यदन्यत्कुरुते कर्म न तस्य फलभाग् भवेत् ॥ ५ ॥
मनुः। न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ॥
सशूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ ६ ॥

सन्ध्याफलमाह ॥ कात्यायनस्मृतौ ।

सन्ध्यालोपाच्च चकितः स्नानशीलश्च यः सदा ॥
तं दोषानोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥ ७ ॥
आचा. यमः। सन्ध्यामुपास्ते ये तु सततं शंसितव्रताः
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ ८ ॥
या. स्मृ.। निशायां वा दिवा वापि यदज्ञानकृतं भवेत्
त्रिकालसन्ध्याकरणात् तत्सर्वं हि प्रणश्यति ॥ ६ ॥

सन्ध्याकालः ॥ वृहत्पाराशरौ ।

प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि ॥
सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम् १०
वृहन्मुहूर्त्तमुत्थाय प्रातः सन्ध्यामुपक्रमेत् ॥

आसूर्यदर्शनात्सन्ध्या सायं चैवार्कदर्शनात्॥ ११॥
सिन्दूरारुणमाभाति नभोयावद्धितारकम् ॥
उदयेस्तमये भानोस्तावत्सन्ध्येति सत्क्रिया॥ १२॥
संव.स्मृ.।तिष्ठपूर्वं जपं कुर्यात्सावित्रीमर्कदर्शनात् ॥
आसीनः पश्चिमां सन्ध्यां सम्यगृक्षविभावनात्॥ १३॥
धर्मसि.।उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥
अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा मता॥ १४॥
उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा ॥
अधमा तारकोपेता सायं सन्ध्या त्रिधा मता॥ १५॥
अध्यर्धयामादासायं सन्ध्यामाध्याह्निकीष्यते॥
मनुः।ऋषयोदीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः॥
प्रज्ञां यशश्च कीर्तिञ्च ब्रह्मवर्चसमेव च ॥ १६॥
आ.द.। तिष्ठेदुदयनात्पूर्वां मध्यमामपि शक्तितः॥

त्रिकालसन्ध्यानामानि ॥ आचा० ।

पूर्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता॥
या भवेत् पश्चिमा सन्ध्या सा तु देवी सरस्वती॥ १७॥

सन्ध्यावर्णा तत्रैव ।

रक्ता भवति गायत्री सावित्री शुक्लवर्णिका ॥
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम् ॥१८

विनियोगादिविचारः ॥ वृ० पा० ।

छन्दोदैवतमार्षं च विनियोगं च ब्राह्मणम् ॥
मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समाचरेत् ॥
एतद्धीनं न कुर्वीत कुर्याच्चेत्तस्य तत्तदासुरम् ॥ १९ ॥

याज्ञवल्क्यः ॥ आचा० ।

आर्षं छन्दश्च दैवत्यं विनियोगं तथैव च ॥
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ २० ॥

प्राणायामः ॥ तत्रैव बृहस्पतिः ।

बध्वासनं नियम्य स्वं स्मृत्वा ऋष्यादिकन्ततः ॥
सन्निमीलितदृङ्मौनी प्राणायामान्समभ्यसेत् २१

शंखअत्रिवसिष्ठकात्यायनाः ।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥
त्रिःपठेदायतः प्राणः प्राणायामः सउच्यते ॥ २२ ॥

हारी·स्मृ·प्राणायामत्रयंधीमान्यथान्यायमतन्द्रितः

योगियाज्ञवल्क्यः॥ आचा० ।

नासिकाकृष्टउच्छ्वासोध्मातःपूरकउच्यते ॥
कुम्भकोनिश्चलश्वासोरिच्यमानस्तु रेचकः॥ २३॥
नीलोत्पलदलश्यामं नाभिदेशे प्रतिष्ठितम् ॥
चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत् ॥ २४॥
कुम्भकेन हृदिस्थाने ध्यायेच्च कमलासनम् ॥
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम् ॥ २५॥
रेचकेनेश्वरन्ध्यायेल्ललाटस्थं महेश्वरम् ॥
शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनम् ॥ २६ ॥

अर्घ्यविचारः ॥ हारीतस्मृतौ ।

ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पाक्षतान्वितम् ॥
उत्थाय मूर्द्धपर्य्यन्तं हंसः शुचिषदित्यृचा ॥ २७॥

का·स्मृ·। उत्थायार्कंप्रतिप्रोहेत्त्रिकेणाञ्जलिनाम्भसःमध्ये तु एकपादर्द्धपादपि।कुर्यात् कृतांजलिर्वापि ऊर्ध्वबाहुरथापि वा ॥ २८ ॥

न्यासः। कराभ्यां तोयमादाय गायत्र्याचाभिमंत्रितम्
आदित्याभिमुखास्तिष्ठंस्त्रिरूर्ध्वं सन्ध्ययोः क्षिपेत् २९
अग्निस्मृ.। जलाभावे महामार्गे बन्धनेष्वशुचावपि
उभयोः सन्ध्ययोः काले रजसा वार्घ्यमुच्यते ३०
सकृदेव तु मध्याह्ने क्षेपणीयं द्विजातिभिः ॥

धर्मसिन्धौ।गायत्र्या विश्वामित्रःसविता गायत्री श्रीसूर्यायार्घ्यदाने विनियोगः प्रणवव्याहृतिपूर्वया तिष्ठन् सूर्योन्मुखः जलाञ्जलिं त्रिः क्षिपेत् असावादित्योब्रह्मेति प्रदक्षिणं भ्रमन् जलं सिंचेत् अर्घ्याञ्जलौ तर्जन्यंगुष्ठयोगोन कार्यः ॥

उपस्थानम् ॥ वृ०पा० ।

उदुत्यं चित्रं देवानामुपस्थाने नियोजयेत् ॥
हंसः शुचिषदित्यादिकेचिदिच्छन्ति सूर्यः॥३१॥

अघमर्षणम् ॥ कात्यायनस्मृतौ ।

करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ॥
जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणम् ॥३२॥

दिग्विचारः ॥ वृ०पा०

ईशान्यभिमुखोभूत्वा द्विजःपूर्वमुखोपि वा ॥
सन्ध्यामुपासयेद्यद्वत्तथावत्स निबोध तत् ॥३३॥
का०स्मृ०। यत्रोपदृश्यते कर्म कर्तुरंगं न तूच्यते ॥
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ ३४॥
यत्र दिङ्नियमोन स्याज्जपहोमादिकर्मसु ॥
तिस्त्रस्तत्र दिशःप्रोक्ताऐन्द्रीसौम्यापराजिताः ३५
तिष्ठन्नासीनः प्रह्वोवा नियमोयत्र नेदृशः ॥
तदासीने न कर्तव्यं न प्रह्वेण न तिष्ठता ॥३६॥

देशमाह ॥ वृ०पा०।

वहिः सन्ध्यामुपासीत संप्राप्तावम्भसः सदा ॥
उपासिता वहिः सन्ध्या विशिष्टफलदा भवेत् ३७
अनृतं मद्यगन्धं च दिवा मैथुनमेव च ॥
पुनाति वृषलस्यान्नं सन्ध्या वहिरुपासिता॥३८॥

आचारादर्शे शातातपः।

गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता॥
नदीषु शतसाहस्री ह्यनन्ता शिवसन्निधौ॥३९॥

त॰व्यासः बहिः सन्ध्या दशगुणा गोष्ठप्रस्रवणादिषु
खाततीर्थे शतगुणा साहस्री जाह्नवीजले ॥ ४० ॥

सन्ध्याकालपरिमाणम् ॥ तत्रैव योगियाज्ञवल्क्यः ।

ह्रासवृद्धी हि सततं दिवसानां यथाक्रमम् ॥
सन्ध्या मुहूर्त्तमात्रं तु ह्रासे वृद्धौ च सा समा ४१

सन्ध्यामन्त्रक्रमः ॥ तत्रैव ।

ॐकारं व्याहृतीः सप्त गायत्रीं शिरसा सह ॥
आपोहिष्ठा ऋचस्तिस्रः सूक्तं चैवाघमर्षणम् ॥ ४२ ॥

सन्ध्याकालातिक्रमे ॥ अत्रिस्मृतौ ।

सायं प्रातस्तु यः सन्ध्यां प्रमादाद्विक्रमेत्सकृत् ॥
गायत्र्यास्तु सहस्रं हि जपेत् स्नात्वा समाहितः ४३

धर्मसिन्धौ ।

कालातिक्रमे प्रायश्चित्तार्थं चतुर्थमंजलिं क्षिपेत् ४४

तत्रैव मार्जने विचारः ।

नद्यादौ तीर्थस्थं ताम्रमृन्मयादिभूमिष्ठपात्रस्थं वा वामकरस्थं वा जलं दर्भादिनादाय मार्जनं सर्वत्र न तु धाराच्युतजलेन ॥ ४५ ॥

सूतके सन्ध्याविचारः ॥ मदनपारिजाते वसिष्ठः ।

अवगाहं ब्रह्मयज्ञं सौरजप्यं च वर्जयेत् ॥ इति.
स्नानं सन्ध्यां त्यजन्विप्रः सप्ताहाच्छूद्रतां व्रजेत् ॥
तस्मात्स्नानं च सन्ध्यां च सूतकेपि न सन्त्यजेत् ४६
सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ॥
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥ ४७ ॥

पैठीनासिस्तु । सूतके सावित्र्यांजलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन् नमस्कुर्यात् ॥ इत्यर्घ्यदानां तां सन्ध्यामाह ॥ ४८ ॥

का.स्मृ. सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते।
होमः श्रौते तु कर्तव्यः शुष्कान्नेनापिवाफलैः ॥ ४९ ॥
सं.स्मृ. पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ॥
दशाहात्तु परं सम्यग्विप्रोऽधीयीत धर्मवित् ॥ ५० ॥

प्रयोगपारिजाते भरद्वाजोपि ।

सूतके मृतके कुर्यात् प्राणायाममन्त्रकम् ॥
तथा मार्जनमन्त्रास्तु मनसोच्चार्य मार्जयेत् ॥ ५१ ॥

गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत्॥
मार्जनं तु न वा कार्य्यमुपस्थानं न चैव हि॥५२

च्यवः शुद्धिदीपे।

अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्जिता॥५

अथावाहनमन्त्रम्। धर्मसिन्धौ।

आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि॥
गायत्री छन्दसा मातर्ब्रह्मयोने नमोस्तुते॥५४॥

अथ विसर्जनम्॥ तत्रैव।

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि॥
ब्राह्मणैरभ्यनुज्ञाता गच्छ देवि यथासुखम्॥५५॥
वृपारा॰। ब्रह्मेशार्कहरीणां तु संगमस्तूभयोभवेत्॥
माध्याह्निकायां सन्ध्यायां सर्वे देवाः समागताः॥
पूजाभिकांक्षिणोये च ये च केचिज्जलार्थिनः॥
श्राद्धान्नभागदेयास्ते येचाग्निहुतभागिनः॥५७॥
अन्यान्युच्चावचानीह स्थावराणि चराणि च॥
माध्याह्निकीमपेक्षन्ते तेषामाप्यायनाहि सा॥५८॥

यस्तस्या नार्चयेद्देवास्तर्पयेन्न पितॄंस्तथा ॥
भूतान्युच्चावचानीह सोन्धतामिस्रमृच्छति ५६ इति

अथ गायत्रीजपविचारः ॥ ८ ॥ वृ०पा०।

गायत्रीं यो न जानाति ज्ञात्वोपास्ते न यो द्विजः ॥
नामधारकमात्रोसौ न विप्रः शूद्रएव सः ॥१ ॥
किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ॥
सांगैः सावित्रिहीनेन न विप्रत्वमवाप्यते ॥२ ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यर्चते पुनः ॥
इहामुत्र च पूज्योसौ ब्रह्मलोकमवाप्नुयात् ॥३॥
गायत्री च तथा वेदा ब्रह्मणा तोलिताः पुरा ॥
वेदेभ्योपि षडंगेभ्यो गायत्र्यतिगरीयसी ॥४॥
शं·स्मृ·। गायत्री वेदजननी गायत्री पापनाशिनी॥
गायत्र्याः परमं नास्ति दिवि चेह च पावनम्॥५॥
हस्तत्राणप्रदा देवी पततां नरकार्णवे ॥
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो नियतः शुचिः॥६॥
ऋ·शृंगः। सर्वात्मना हि या देवी सर्वभूतेषु संस्थिता

गायत्री मोक्षहेतुर्वै मोक्षस्थानमलक्षणम् ॥ ७ ॥
जपफलमाह॥वृ०पारा०। मनुःयाज्ञवल्क्यशङ्खपराशरवसिष्ठाः॥
जप्येनैकेन सिद्धेन किं न सिद्धं भवेदिह ॥
कुर्यादन्यन्न वा कुर्यान्मैत्रोब्राह्मण उच्यते ॥८॥
वृ०पा०।विधियज्ञाःपाकयज्ञाये चान्ये वहवोमखाः॥
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥९॥
शतेन जन्मजनितं सहस्रेण पुरा कृतम् ॥
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥१०॥
अस्मिन्कलौ च विदुषा विधिवत्कर्म यत्कृतम्॥
भवेद्दशगुणं तद्वत्कृतादेर्युगतोधिकम् ॥११॥
शंखोपि।शतजप्ता तु सा देवी दिनपापप्रणाशिनी
सहस्रजप्ता तु तथा पातकेभ्यः समुद्धरेत् ॥ १२॥
दशसाहस्रजप्ता तु सर्वकल्मषनाशिनी ॥
सुवर्णस्तेयकृद्विप्रोब्रह्महा गुरुतल्पगः ॥
सुरापश्च विशुद्ध्येत लक्षजाप्यन्न संशयः॥ १३॥
आचारादर्शे ॥ हारीतः ।
प्रणव व्याहृतिसावित्रीजपन्पापेभ्योमुच्यते ॥

शतं जप्त्वा मानसात्पूतोभवति सहस्रं जप्त्वा वाक्कायकृतात्पूतो भवति ॥ १४ ॥

त॰यमः। न तथा वेदजप्येन पापं निर्दहति द्विजः ॥ यथा सावित्रीजप्येन सर्वपापैः प्रमुच्यते ॥ १५ ॥

जपे देशमाह ॥ तत्रैव याज्ञवल्क्यः।

गृहे त्वेकगुणं जाप्यं नद्यां तु त्रिगुणंस्मृतम्॥
गवांगोष्ठे शतगुणमग्न्यागारे शताधिकम् ॥१६॥
सिद्धिक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ ॥
सहस्रं शतकोटीनामनन्तं शिवसन्निधौ ॥१७॥

वृ॰पा॰।देवतायतने कुर्याज्जपं नद्यादिकेषु च॥
आश्रमेषु यतीनां च गोष्ठेवा स्वगृहेपि वा॥१८॥
चतुर्ष्वन्तिमपूर्वेषु ह्युत्तमादिक्रमेण तु ॥
दशगुणं सहस्रं स्यात्फलं विष्णावनन्तकम् ॥१९॥

गायत्रीवर्णदेवताः ॥ वृ॰ पा॰ ।

यदक्षरे तु दैवत्यं चतुर्विंशतिरुच्यते ॥
संन्यासं यद्विबोधेन कुर्वन्ब्रह्मत्वमाप्नुयात् ॥२०॥

जानीयादक्षरं देव्याः प्रथमं वाशुशुक्षणे ॥
प्राभंजनं द्वितीयं तु तृतीयं शशिदैवतम् ॥ २१॥
विद्युतश्च तुरीयं तु पंचमं तु यमस्य च ॥
षष्ठं च वारुणं तत्त्वं सप्तमं तु बृहस्पतेः ॥ २२ ॥
पार्जन्यमष्टमं तत्त्वं नवमं चन्द्रदैवतम् ॥
गान्धर्वं दशमं विद्यात्त्वाष्ट्रमेकादशं तथा ॥२३॥
मैत्रावरुणमन्यद्वै तथान्यच्च त्रयोदशम् ॥
चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा स्मृतम् ॥२४॥
मरुद्दैवतकं ज्ञेयं पञ्चदशं यदक्षरम् ॥
सौम्यं च षोडशं तत्त्वं तथा चांगिरसं परम् ॥२५॥
विश्वेषां चैव देवानामष्टादशमथाक्षरम् ॥
आश्विनैकोनविंशं च विंशं प्रजापतेः॥ २६॥
एकविंशं कुवेरस्य द्वाविंशं शङ्करस्य च ॥
त्रयोविंशं तथा ब्राह्मं चतुर्विंशं च वैष्णवम् ॥२७॥
इति ज्ञात्वा द्विजः सम्यक्सर्वा अक्षरदेवताः॥

कुर्वञ्जपादिकं विप्रः परं श्रेयोधिगच्छति ॥२८॥

गायत्रीशब्दस्यार्थः ।

गायंतं त्रायते यस्माद्गायत्री तेन सोच्यते ॥

धर्मसिन्धौ।तत्सवितुर्हृदयाय नमः वरेण्यं शिरसे स्वाहा भर्गोदेवस्य शिखायै वषट् धीमहि कवचाय हुं धियोयोनोनेत्रत्रयाय वौषट् प्रचोदयात् अस्त्राय फट् इति षडंगन्यासः कार्यः न वा कार्योन्यासविधेरवैदिकत्वादिति गृह्यपरिशिष्टे स्पष्टम्, एतेनाक्षरन्यासपादन्यासादीनां मुद्रादिविधेः शापमोचनादिविधेश्च तान्त्रिकत्वेनावैदिकत्वादनावश्यकत्वं वेदितव्यम् ॥

जपलक्षणम् ॥ वृ०पा० ।

प्रणवोभूर्भुवः स्वश्च पुनः प्रणवसंयुतम् ॥
अंत्योंकारसमायुक्तां मन्यन्ते मुनयोपरे ॥ २९॥
प्रणवोन्ते तथा चादावाहुरन्ये जपक्रमम्॥
आदावेव तु चोंकारआवृतावादिकोन्ततः॥ ३०॥
तदाद्यं च तदन्तं च कुर्यात् प्रणवसंपुटम्॥

आद्यन्तरक्षितां कुर्यादिति पाराशरोऽब्रवीत्॥ ३१॥

आचारादर्शे याज्ञवल्क्यः।

ओँकारः पूर्वमुच्चार्य्यो भूर्भुवः स्वस्ततः परम्॥
गायत्रीप्रणवश्चान्ते जप्ये ह्येवमुदाहृतम् ॥ ३२॥
हारी॰स्मृ॰ त्रिविधो जपयज्ञः स्यात्तस्य तत्त्वं निबोधत
वाचिकश्च उपांशुश्च मानसश्च त्रिधाकृतिः॥ ३३॥
त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः॥
यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः ॥ ३४॥
मन्त्रमुच्चारयन्वाचा जपयज्ञस्तु वाचिकः ॥
शनैरुच्चारयन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत्॥ ३५॥
किञ्चिच्छ्रवणयोग्यः स्यात्सउपांशुर्जपः स्मृतः॥
धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् ॥ ३६ ॥
शब्दार्थचिन्तनाभ्यां तु तदुक्तं मानसं स्मृतम् ॥
वृ॰पा॰। उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः।

ध्यानम् ॥ वृ॰ पा॰ ।

तत्प्रकृतिः स च स्वान्तं विकारो बुद्धिरेव च ॥
तुरित्येतदहंकारं विशब्दं विद्धि पापहम् ॥ ३८॥

रे स्पर्शं च णि रूपं च यं रसं गन्धमत्रभम्॥
गो श्रोत्रं दे त्वचं वा व चक्षुःस्य रसना तथा॥ ३६॥
धी नासा च म वाचा च हि हस्तौ धी च यद्वयम्॥
यो उपस्थं मुखं योन्यो नः खं प्रकारमारुतम्॥ ४०॥
चो तेजोदजलं यात्स। गायत्र्यास्तत्त्वचिन्तना ॥
चतुर्विंशतितत्त्वानां प्रत्येकं चाक्षरेषु यः ॥
गायत्र्याः संस्मरेद्योगी सयाति ब्रह्मणः पदम् ४१

जपविधिः ॥ दक्षस्मृतौ ।

मार्जनं जलमध्ये तु प्राणायामोयतस्ततः ॥
उपस्थानं ततः पश्चाद्गायत्रीजपउच्यते ॥ ४२॥
सविता देवता यस्य मुखमाग्निस्त्रिपात्स्थिता ॥
विश्वामित्रऋषिश्छन्दोगायत्री सा विशिष्यते॥ ४३

शंखस्मृतौ। कुशशय्यामासीनः कुशोत्तरीयोवा कुशपवित्रपाणिः प्राङ्मुखः सूर्याभिमुखोवा अक्षमालामुपादाय देवताध्यायी जपं कुर्यात् ॥ ४४ ॥
मालालक्षणम्॥ तत्रैव। सुवर्णमणिमुक्तास्फटिकपद्माक्षरुद्राक्षपुत्रजीवकानामन्यतमानादाय मालां कु-

यति कुशग्रन्थिं कृत्वा वामहस्तोपायनैर्वा गणयेत्
वृ.पा.।असंख्यमासुरं यस्मात्तस्मात्तद्गणयेद् ध्रुवम्
स्फाटिकेब्जाक्षरुद्राक्षपुत्रजीवसमुद्भवैः ॥
अक्षमाला प्रकर्तव्या प्रशस्ता चोत्तरोत्तरा॥४६॥
अभावे त्वक्षमालायाः कुशग्रन्थ्यात्र पाणिना॥
यथा कथंचिद्गणयेत्ससंख्यं तद्भवेद्यथा ॥४७॥

गायत्रीव्याख्यायाम् ॥ पाद्मे ।

अरिष्टं पुत्रजीवं च शङ्खं पद्मं तथा मणिम् ॥
कुशग्रन्थिं च रुद्राक्षमुत्तमं चोत्तरोत्तरम् ॥४८॥
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् ॥
उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ॥
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ॥४९॥
अक्षुद्रसमरन्ध्रा च परिपूर्णदृढा नवा ॥
निश्चला ग्रथिता व्यङ्गा अन्योन्यघृष्टिवर्जिता॥५०॥
सशब्दा चञ्चला या तु त्रुटिता ग्रथिता तु या॥
भिन्नसूत्रेण ग्रथिता पाषण्डस्य पुरातनी ॥
मालादुःखप्रदायिन्योग्रथिता निन्द्यतन्तुभिः॥५१॥

अक्षास्थिमात्रामणयः श्रेष्ठाः स्युर्जपकर्मणि॥
अष्टोत्तरशतं संख्या मणीनां श्रेयसी भवेत् ॥५२॥
तदर्द्धसंख्या कथिता मध्यमा चाधमा पुनः॥
सप्तविंशतिसंख्याता ततोनैवाधमा भवेत् ॥५३॥
तर्जन्यान स्पृशेत् सूत्रं न कम्पेन विधूनयेत्॥
अङ्गुष्ठस्य तु मध्यस्थं परिवर्तं समाचरेत् ॥५४॥
मध्यमाकर्षणं तस्याः सर्वसिद्धिप्रदायकम्॥
नान्याङ्गुलिभिराकर्षेन्न नखैश्च तथा स्पृशेत्॥५५
पाणिमा-अनामिका मध्यरेखावध्यधः प्रक्रमेण च॥
तर्जन्यादिगतान्ते च अक्षमाला करे स्थिता॥॥५६।
गायत्र्यावेदवीजत्वाद्वेदः पर्वसु गीयते ॥
मध्यमादिपर्वद्वयं जपकाले तु वर्जयेत् ॥५७॥
एवं मेरुं विजानीयाद् गदितं ब्रह्मणा स्वयम्॥
अङ्गुष्ठाग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घनात्॥
असंख्यातं तथा जप्तं तत्सर्वं निष्फलं भवेत्॥५८॥

कामनाविशेषेणाङ्गुलिविशेषमाह ॥ वासिष्ठः।

अंगुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशिनी ॥

मध्यमाधनसिद्ध्यै स्याच्छान्तिकर्मण्यनामिका ५६
कनिष्ठाऽऽकर्षणे ज्ञेया जपकर्मणि सिद्धिदा ॥

जपसंख्या ॥ हारीतस्मृतौ ।

सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ ६० ॥

गायत्रीव्याख्यायां मनुः ।

ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ॥
वानप्रस्थोयतिश्चैव द्विसहस्राधिकं जपेत् ॥ ६१ ॥

जपेनियमाः ॥ वृहत्पाराशरौ ।

न जपं प्रसभं कुर्यात्प्रसभं घ्नन्ति राक्षसाः॥
ब्रह्मणा भागधेयस्तु तेषां चैव विधिः कृतः॥ ६२ ॥
न चंक्रमन्न च हसन्न पार्श्वमवलोकयन् ॥
नान्यासक्तोनजल्पश्च न चैवोर्ध्वशिरास्तथा॥ ६३ ॥
नांघ्रिणा पीडयन् पादं न चैव हि करावपि ॥
नैवं विधं जपं कुर्यान्न च संचालयेत्करम् ॥ ६४ ॥

आचारादर्शे याज्ञवल्क्यः ।

ध्यायेत मनसा मन्त्रान् जिह्वोष्ठौ न विचालयेत् ॥

न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत् ६५

गायत्रीव्याख्यायाम् ।

वस्त्रेणाच्छाद्य स्वकरं दक्षिणं यः सदा जपेत् ॥
तस्य तत्सफलं जप्यं तद्धीनमफलं भवेत् ॥६६॥
कृत्वोत्तानौ करौ प्रातःसायं मुकुलितौ करौ ॥
मध्ये तिर्य्यक्करौ प्रोक्तौ जपएवमुदाहृतः ॥६७॥
ध.प्रवृ.।प्रातर्नाभौ करं कृत्वा मध्याह्ने हृदिसंस्थितम्।
सायं जपति नासाग्रे जपस्तु त्रिविधःस्मृतः॥६८॥

जपे आसनानि आह व्यासः।।गायत्रीव्याख्यायाम् ।

कौशेयं कम्बलं चैव अजिनं पट्टमेव वा ॥
दारुजं वलपत्रं च आसनं परिकल्पयेत् ॥६९ ॥
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥
वशाजिने व्याधिनाशः सर्वं वै चित्रकम्बले ॥
नादीक्षितश्चोपविशेत्कृष्णसाराजिने गृही ॥७०॥
तत्रैव।पादेन पादमाक्रम्य जपं नैव तु कारयेत् ॥
शिरः प्रावृत्य वस्त्रेण ध्यानं नैव प्रशस्यते ॥ ७१॥
न पाणिपादचपलोन नेत्रचपलोद्विजः ॥

न च वाक् चपलश्चैव जपन् सिद्धिमवाप्नुयात् ७२
मनःसन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ॥
अव्यग्रत्वमनिर्वेदोजपसम्पत्तिहेतवः ॥ ७३ ॥

जपे भक्ष्यमाह ॥ आचारादर्शे याज्ञवल्क्यः ।

शाकयावकभैक्षाणि पयोमूलफलानि च ॥
दधि सर्पिस्तथा ह्यापः प्रशस्तं ह्युत्तरोत्तरम् ॥७४॥
चरवोह्युपवासश्च भक्षं नक्तमयाचितम् ॥
विशशृङ्गाटशालूकहविष्यान्नानि यानि तु ॥
एतान्यनुव्रतान्याहुः शस्तानि जपकर्माणि ॥७५॥

योगियाज्ञवल्क्यप्रदर्शितया रीत्या ब्राह्मणसर्वस्वे गायत्र्यर्थोयथोक्तस्तथा अत्र प्रदर्श्यते ॥ तत्तस्य भर्ग तेजोधीमहि चिन्तयामः ॥ अत्र यद्यपि तमिति पदं भर्गोविशेषणं नास्ति तथापि यदिति यच्छब्दप्रयोगादेवतामिति तच्छब्दोलभ्यते॥तथा च योगियाज्ञवल्क्यः। तच्छब्देन तु यच्छब्दोबोद्धव्यःसततं बुधैः । उदाहृते तु यच्छब्दे तच्छब्दःस्यादुदाहृतः॥ किं भूतस्य तस्य सवितुः सर्वभूतानां प्रसवितुरित्यर्थः॥ तथाच योगियाज्ञवल्क्यः । सविता सर्वभूतानां

सर्वभावान् प्रसूयते । सवनात् प्रेरणाच्चैव सविता तेन चोच्यते ॥ पुनः किंभूतस्य देवस्य दीप्तिक्रीडा-युक्तस्य। तथा च योगियाज्ञवल्क्यः।दीप्यते क्रीडते य-स्माद्रोचते द्योतते दिवि । तस्माद्देवइति प्रोक्तः स्तू-यते सर्वदेवतैः ॥ किं भूतं योभर्गोनोऽस्माकं धियो-बुद्धीः योभर्गोनियोजयति इत्यर्थः॥तथा च योगिया-ज्ञवल्क्यः ।चिन्तायामोवयं भर्गं धियोयोनः प्रचोद-यात् । धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनःपुनः॥ तदि-ह भर्गशब्देन बहुविधात्मयुक्तः सवितृमण्डलमध्य-गतआदित्यदेवतास्वरूपः पुरुषउच्यते॥ तथा च यो-गियाज्ञवल्क्यः। भृजिः पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ । भ्राजते दीप्यते यस्मात् जगदन्ते हरत्यपि ॥ कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः। भ्राजते तत्स्वरूपेण तस्माद्भर्गः स उच्यते॥ तथा। भेति भा-सयते लोकान् रेति रञ्जयते प्रजाः।गइत्यागच्छतेऽ-जस्रं भरगोभर्गउच्यते॥ अयमेव तु भर्गोबहिराकाशे सूर्य्यमण्डलान्तःस्थोऽपि सकलप्राणिनां हृदयमध्ये जीवभूतः प्रतिवसति ॥ तथा च योगियाज्ञवल्क्यः । आदित्यान्तर्गतं यच्च ज्योतिषां ज्योतिरुत्तमम् । हृदये सर्वभूतानां जीवभूतः सतिष्ठति॥तथा। हृद्यो-

स्मिन् तपति ह्येषवाह्ये सूर्य्यस्य चान्तरे। अग्नौ वा धूम-केतौ च ज्योतिश्चित्रकरं चयत्॥ हृद्याकाशे च योजीवः साधकैरुपवर्ण्यतोसएवादित्यरूपेण वहिर्नभसि राजते अत्र यद्यपि प्राणिनां हृदये जीवरूपतया यएव भर्गः तिष्ठति सएव आकाशे आदित्यमध्ये पुरुषरूपतया-विद्यतेअतो अनयोर्भेदोनास्त्येव तथापि धियोयोनः प्रचोदयात् प्राणिनां बुद्धेः प्रेरकत्वात् योहृदयवर्ती स-एवचिन्तनीयः।अयं तु विशेषः सूर्य्यमण्डलमध्यवर्ति-भर्गेण सह एकीभूतश्चिन्तनीयः पुनः किंभूतं भर्गं वरेण्यं वरणीयं प्रार्थनीयं जन्ममृत्युदुःखादिनाशाय ध्यानेन उपासनीयामित्यर्थः ॥ तथा च योगियाज्ञव-ल्क्यः।वरेण्यं वरणीयं च जन्म संसारभीरुभिः। आ-दित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ॥ जन्म-मृत्युविनाशाय दुःखस्य त्रिविधस्य च। ध्यानेन पुरु-षोयस्तु द्रष्टव्यः सूर्य्यमण्डले ॥ एवं गायत्रीमन्त्र-स्य अर्थमुक्त्वा व्याहृतियुक्ततयैव तस्य जप्यतया भर्गसामानाधिकरण्येन तदर्थमाह तत्रैव ॥पुनःकिं-भूतः सः भर्गः भूर्भुवः स्वरिति भूर्लोकान्तरिक्षलोक-स्वर्गलोकान्तस्वरूपोऽपिसएवदेवतात्मकः भर्गइत्यर्थः

तत्रैव व्यासः ।

वेदस्याध्ययनं कार्यं धर्मशास्त्रस्य वापि यत् ॥
अजानतार्थं तत्सर्वं तुषाणां कण्डनं यथा ॥१॥
यथा पशुर्भारवाहीन तस्य भजते फलम् ॥
द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥ २ ॥
योऽधीते नार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा॥
भारवाही च भृतकः केवलं क्लेशभाक् भवेत् ॥३॥
तस्मादर्थपरिज्ञाने यत्नः कार्योविजानता ॥
ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कथितं यथा ॥४॥
कूर्मपु.।गायत्री वेदजननी गायत्रीलोकपावनी॥
न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ॥ ५ ॥
याज्ञ.।गायत्रीनिरतं हव्यकव्येषु विनियोजयेत्॥
तस्मिन्न तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥ ६ ॥
गायत्र्याःपदमर्द्धंतु ऋचोऽर्द्धमृच एव वा ॥
ब्रह्महत्या सुरापानं गुरुदाराभिमर्षणम् ॥
यच्चान्यद्दुष्कृतं सर्वं पुनातीत्याह वैमनुः॥ ७ ॥

आग्निपुराणे ।

गायत्रीं जपते यस्तु द्वौ कालौ ब्राह्मणःसदा॥
असत्प्रतिग्रहीतापि सयाति परमां गतिम् ॥इति॥

अथ तर्पणाविचारः ॥ ९ ॥

पारस्करगृह्यसूत्रे । अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्योमनुष्येभ्यश्चोदपात्रात् ॥ १ ॥

मनुः।नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्॥
देवताभ्यर्चनं चैव नित्यहोमं तथैव च ॥ २ ॥
गौ.स्मृ.।नित्यः स्वाध्यायः पितृभ्यश्चोदकदानम्।३

आचारादर्शे शातातपः ।

तर्पणं तु शुचिःकुर्यात्प्रत्यहं स्नातकोद्विजः ॥
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥४ ॥
व्यासस्मृ.।प्रथमं कृतस्वाध्यायः तर्पयेच्चाथ देवताः॥
जान्वाच्यदक्षिणां दर्भैः प्रागग्रैः सयवैस्तिलैः॥५ ॥

एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतकः ॥
समजानुद्वयोब्रह्मसूत्रहारउदङ्मुखः ॥
तिर्यग्दर्भैश्च वामाग्रैर्यवैस्तिलविमिश्रितैः ॥ ६ ॥
अम्भोभिरुत्तराक्षिप्तैः कनिष्ठामूलनिर्गतैः ॥
द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तर्पयेत्ततः॥७॥
दक्षिणाभिमुखःसव्यं जान्वाच्यद्विगुणैःकुशैः ॥
तिलैर्जलैश्च देशिन्या मूलदर्भाद्विनिःसृतैः॥ ८ ॥
दक्षिणांसोपवीतः स्यात् क्रमेणाञ्जलिभिस्त्रिभिः॥
सन्तर्पयेत् दिव्यपितृंस्तत्परांश्च पितॄन् स्वकान् ९॥
मातृमातामहांस्तद्वत् त्रीनेवं हि त्रिभिस्त्रिभिः॥
मातामहस्य येऽप्यन्ये गोत्रिणोदाहवर्जिताः॥१०॥
तानेकाञ्जलिदानेन तर्पयेच्च पृथक् पृथक् ॥
असंस्कृतप्रमीताये प्रेतसंस्कारवर्जिताः ॥११॥
वस्त्रनिष्पीडिताम्भोभिस्तेषामाप्ययनंभवेत्॥
अतर्पितेषु पितृषु वस्त्रं निष्पीडयेच्च यः ॥ १२ ॥

निराशाः पितरस्तस्य भवन्ति सुरमानुषैः ॥
पयोदर्भस्वधाकारगोत्रनामतिलैर्भवेत् ॥ १३ ॥
सुदत्तं तत्पुनस्तेषामेकेनापि वृथा विना ॥
अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम् ॥
अनासनस्थितेनापि तज्जलं रुधिरायते ॥ १४ ॥
वृ.पा.-अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥
तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना १५
देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा ॥
मन्यन्ते कवयः केचिदित्येवं तर्पणे क्रमम् ॥ १६ ॥
विना रौप्यसुवर्णाभ्यां विना ताम्रतिलैरपि ॥
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठति ॥ १७ ॥
जलस्थश्च जले सिंचेत्स्थलस्थश्च तथा स्थले ॥
पादौ स्थाप्योभयत्रापि प्रक्षाल्योभयतः शुचिः १८
नार्द्रवासाः स्थलस्थस्तु बुधस्तर्पणमाचरेत् ॥
जानुदघ्नजलस्थो वा विगलत्स्नानवस्त्रकः ॥ १९ ॥

यमस्मृ·नाभिमात्रे जले स्थित्वा हृदयेनानुचिन्तयेत्
आगच्छन्तु मे पितरोगृह्णन्त्वेताञ्जलाञ्जलीन् ॥
हस्तौ कृत्वा तु संयुक्तौ पूरयित्वा जलेन च ॥
गोशृंगमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् २१
आकाशे च क्षिपेद्वारि वारिस्थोदक्षिणामुखः ॥
पितृणां स्थानमाकाशं दक्षिणा दिक् तथैव च २२
देवतानां पितृणां च जले दद्याज्जलाञ्जलीन् ॥
असंस्कृतप्रमीतानां स्थलेदद्याज्जलाञ्जलीन् २३
श्राद्धे हवनकाले च दद्यादेकेन पाणिना ॥
उभाभ्यां तर्पणे दद्यादिति धर्मोव्यवस्थितः ॥२४॥
शं·स्मृ·।सौवर्णरजताभ्यां च खड्गेनौदुम्बरेण च ॥
दत्तमक्षयतां याति पितृणां तु तिलोदकम् ॥२५॥
हेम्ना तु सह यद्दत्तं क्षीरेण मधुना सह ॥
तदप्यक्षयतां याति पितृणां तु तिलोदकम् २६
का·स्मृ·।आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम्

पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च॥ २७॥
कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् ॥
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥ २८॥
अ.स्मृ.।तीर्थस्नानं महादानं यच्चान्यत्तिलतर्पणम्॥
अब्दमेकं न कुर्वीत महागुरुनिपाततः ॥ २९ ॥
गङ्गा गया त्वमावस्या वृद्धिश्राद्धे क्षयेऽहनि ॥
मघापिण्डप्रदानं स्यादन्यत्र परिवर्जयेत् ॥ ३० ॥

आचारादर्शे योगियाज्ञवल्क्यः ।

यत्राऽशुचिस्थलं वा स्यादुदके देवताः पितॄन् ॥
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥ ३१ ॥
त.यमः।भूमौ यदापो नीयन्ते दाता चैव जले स्थितः
वृथा तद्दीयते तोयं नोपातिष्ठति कस्य चित्॥ ३२॥
शंखः।उदकेनोदकं कुर्यात्पितृभ्यश्च कदाचन ॥
उत्तीर्य च शुचौ देशे कुर्य्यादुदकतर्पणम्॥ ३३॥
याज्ञव.।यद्युद्धृतं प्रसिंचेद्वै तिलान्संमिश्रयेज्जले॥
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः॥ ३४॥

मरीचिः। तिलानामप्यभावे तु सुवर्णरजतान्वितम्
तदभावे निषिंचेत्तु दर्भैर्मन्त्रेण वा पुनः ॥ ३५ ॥

उशनाः । न वेष्टितशिरा न कृष्णकाषायवासा देवपितृकार्यं कुर्यात् ॥

योगियाज्ञ.। सवर्णेभ्योजलं देयमसवर्णे कदाचन॥

आ०सू० वासिष्ठः ।

सम्बन्धमनुकीर्त्यैव नामगोत्रमनन्तरम् ॥
वस्वादिरूपं संकीर्त्य स्वधाकारेण तर्पयेत् ॥३७॥

व्यासः। पितृभ्यः प्रथमं दद्यात्ततोमातृभ्य एव च ॥
ततोमातामहानां च तत्पत्नीनां ततोजलम्॥ ३८॥

अंगिराः। मार्जनं तपर्णं श्राद्धं न कुर्याद्वारिधारया॥

वायुपु.। शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः॥

ब्रह्मपु.। नित्यंनैमित्तिकं काम्यंत्रिविधं स्नानमिष्यते
तर्पणं तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥ ४० ॥

कात्या.। उपरागे पितृश्राद्धपातेऽमायांच संक्रमे ॥
निषेधेऽपीह सर्वत्र तिलैस्तर्पणमाचरेत् ॥ ४१ ॥

तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ॥
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥४२॥
मरीचिः।सप्तम्यां भानुवारे च गृहेजन्मादिने तथा ॥
मृत्युपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ ४३ ॥
संग्रहे। नन्दायां भार्गवादिने कृत्तिकासु मघासुच ॥
भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥ ४४॥
तर्पणं नैव कुर्वीत तिलमिश्रं कदाचन ॥
बौधा०।विवाहे चोपनयने चौले सति यथाक्रमम् ॥
वर्षमर्धं तदर्धं च नेत्यके तिलतर्पणम् ॥ ४५ ॥
वह्निपु०। दर्शस्नानं गयाश्राद्धं तिलैस्तर्पणमेवच ॥
न जीवत् पितृकोभूप कुर्यात् कृत्वाघमाप्नुयात् ४६
वृ. पा.। ध्रुवोधरश्च सोमश्च आपश्चैवानिलोनलः॥
प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥४७ ॥
अजैकपादहिर्बुध्न्योविरूपाक्षश्च त्र्यम्बकः॥
हरश्च विश्वरूपश्च रैवतश्च सुरेश्वरः ॥४८॥

सावित्रश्च जयन्तश्च पिनाकी चापराजितः ॥
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ॥४९॥
इन्द्रोधाता भगः पूषामित्रोथ वरुणोऽर्यमा ॥
अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ॥५०॥
एते वै द्वादशादित्या देवानां परमाः स्मृताः ॥
लि॰स्मृ॰ क्रतुर्दक्षोवसुःसत्यःकालकामोधूरिलोचनौ॥
पुरूरवा आर्द्रवाश्च विश्वेदेवाः प्रकीर्तिताः ॥इति॥

अथ देवपूजाविचारः ॥१०॥ बृहत्पाराशरी ।

देवार्चनमहं वक्ष्ये यदुक्तं मुनिभिः पुरा ॥
वैदिकैरेव तन्मन्त्रैर्यस्य यस्तस्य तैरपि ॥ १ ॥
अर्चयन्वैदिकैर्मन्त्रैर्नानुग्रहमुपेक्षते ॥
वैदिकोनुग्रहस्तस्य किं वेदादधिकं परम् ॥ २ ॥
ब्रह्माणं वैधसैर्मन्त्रैर्विष्णुं स्वैः शङ्करं स्वकैः ॥
अन्यानपि तथा देवानर्चयेन्निजमन्त्रकैः ॥ ३॥
मन्त्रन्यासं पुरा कृत्वा स्वदेहे देवतासु च ॥
गायत्र्योंकारन्यस्तांगः पूजयेद्विष्णुमव्ययम् ॥४॥

विन्यस्य व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेणतु ॥
ब्रह्मीभूतः शुचिः शान्तोदेवयागमुपाचरेत् ॥५॥
विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापराशिं छिनत्ति यः ॥ ६ ॥
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥
तज्ज्ञात्वा मुनयःसर्वे विष्णोः सायुज्यमाप्नुयुः॥७॥
षट्स्वमीषु हरेः सम्यगर्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ॥८॥
अग्नौ क्रियावतां देवोदिवि देवोमनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥९॥
आपोह्यायतनं तस्य तस्मात्तासु हरिः सदा ॥
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम् १०
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ॥
आर्चितं स्यादिदन्तेन विश्वं भुवनसप्तकम् ॥११॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुभं तस्य दैवतम्॥
पुरुषोयोजगद्बीजमृषिर्नारायणः स्मृतः ॥१२॥

तस्य सूक्तस्य सर्वस्य ऋचां न्यासं यथाविधि॥
दैवे चैवात्मनि यथा संप्रवक्ष्याम्यतः परम् ॥१३॥
हस्तन्यासं तथा कृत्वा स्मृत्वा विष्णुं तथाऽव्ययम्॥
शिखाबन्धं च दिग्बन्धं संचिन्त्य विष्णुमात्मनि १४
विन्यसेत्प्रथमां वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्॥१५॥
पंचमीं वामजानौ तु षष्ठीं दक्षिणतोन्यसेत् ॥
सप्तमीं वामकट्यां च दक्षिणस्यां तथाष्टमीम् १६
नवमीं नाभिमध्ये तु दशमीं हृदये न्यसेत् ॥
एकादशीं वामबाहौ द्वादशीं दक्षिणे न्यसेत् १७
कण्ठे त्रयोदशीं न्यस्य तथा वक्त्रे चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं कृत्वा षोडशीं मूर्ध्नि विन्यसेत्॥
एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत् ॥
आसनं चिन्तयेन्मेरुमष्टपत्रं सकर्णिकम् ॥ १८॥
व्याहृतीनामथ न्यासं तं कुर्याद्विधिवद्द्विजः ॥

भूर्लोकं पादयोर्न्यस्य भुवर्लोकं तु जानुनोः॥२०॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा॥
जनलोकं तु हृदये कण्ठदेशे तपस्तथा॥ २१॥
भ्रुवोर्ललाटसन्ध्योस्तु सत्यलोकः प्रतिष्ठितः॥
हिरण्मये परे नित्ये विरजं ब्रह्म निष्कलम्॥२२॥
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदोविदुः॥
आवाहनमथ प्राह विष्णोरमिततेजसः॥
यथार्चा क्रियते तत्र स्वदेहे चिन्तयेत्तथा॥२३॥
आद्ययावाहयेद्देवमृचात्र पुरुषोत्तमम्॥
यथा देहे तथा देवे न्यासं कुर्याद्विधानतः॥२४॥
द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया॥
चतुर्थ्यार्घः प्रदातव्यः पञ्चम्याचमनं तथा॥२५॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वसनं तथा॥
यज्ञोपवीतं चाष्टम्या नवम्या गन्धलेपनम्॥२६॥
पुष्पं देयं दशम्या तु एकादश्या च धूपयेत्॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेद्यकम्२७

चतुर्दश्याञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणाम्॥
षोडश्योद्वासनं कुर्योच्छेषं कार्याणि पूर्ववत्॥ २८॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं हरेः ॥
षण्मासात्सिद्धिमाप्नोति योर्चयेद्देवमेव हि॥ २९॥
स्मृत्यन्तरे। एकामूर्तिर्नपूज्यैवगृहिणा स्वेष्टमिच्छता
अनेकमूर्तिसम्पन्नः सर्वान्कामानवाप्नुयात्॥ ३०॥
गृहे लिङ्गद्वयं नार्च्यं गणेशत्रितयं तथा ॥
शङ्खद्वयं तथा सूर्यौ नार्च्यौ शक्तित्रयं तथा ३१
द्वे चक्रे द्वारकायाश्च शालग्रामशिलाद्वयम् ॥
तेषां तु पूजनेनैव उद्वेगं प्राप्नुयाद्गृही ॥ ३२ ॥

स्कान्दे ।

शिलाप्यामलकी तुल्या पूज्या सूक्ष्मैव या भवेत् ॥
यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् ३३
तत्रान्तरे। दीपं दक्षिणतोदद्यात्पुरोनैव तु वामतः॥
वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे ॥३४॥

कालिकापुराणे ।

स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा ॥
घण्टानादं प्रकुर्वीत तथा नीराजनेपि च ॥ ३५ ॥

गौतमीये ।

उत्तोल्य दृष्टिपर्यन्तं घण्टां वामदिशि स्थिताम् ॥
वादयन्वामहस्तेन दक्षहस्तेन चार्चयेत् ॥ ३६ ॥

घण्टापूजनम् ।

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ॥
कुरु घण्टे महानादं देवतार्चनसन्निधौ ॥ ३७ ॥
वाचस्प. । कुर्यादावाहनं मूर्तौ मृन्मय्यां सर्वदैव हि ॥
प्रतिमायां जले वह्नौ नावाहनाविसर्जने ॥ ३८ ॥

पुष्पार्पणप्रकारः कालिकापुराणे ।

पत्रं वा यदि वा पुष्पं फलं वापि तथैव च ॥
केशवार्थे शिवार्थे वा यथोत्पन्नं तथार्पयेत् ३९
मध्यमाऽनामिकामध्ये पुष्पं संगृह्य पूजयेत् ॥
अंगुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत् ॥ ४० ॥

तुलसीग्रहणविचारः ॥ वायुपुराणे ।

अस्नात्वा तुलसीं छित्वा यः पूजां कुरुतेनरः ॥
सोपराधी भवेत्सत्यं तत्सर्वं निष्फलं भवेत् ॥ ४१ ॥
पाद्मे । देवार्थे तुलसीछेदोहोमार्थे समिधां तथा ॥
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥ ४२ ॥
पूर्णिमायाममायां च द्वादश्यां रविसंक्रमे ॥
तैलाभ्यंगे च स्नातेन मध्याह्ने निशिसन्ध्ययोः ४३
अशौचेऽशुचिकाले च रात्रिवासान्वितेऽपि वा ॥
तुलसीं ये च चिन्वन्ति ते छिन्दन्ति हरेःशिरः ४४
वाच. । शालग्रामशिलाचार्थं प्रत्यहं तुलसीक्षितौ ॥
तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ॥
सङ्क्रान्त्यादौ निषिद्धेपि तुलस्यवचयः स्मृतः ४५

तुलसीपत्रग्रहणमन्त्रः ।

तुलस्यमृतजन्मासि सदा त्वं केशवप्रिया ॥
केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥ ४६ ॥
त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिम् ॥

तथा कुरु पवित्राङ्गि कलौ मलविनाशिनी ॥४७॥
पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ॥
यथोत्पन्नं तथा देयं विल्वपत्रमधोमुखम् ॥४८॥
षण्मासानन्तरं विल्वपत्रं पर्युषितं भवेत् ॥
पूज्याएतेन वै देवाः सूर्यलम्बोदरौ विना॥४६॥
ध.सि.। अपर्युषितनिच्छिद्रैःप्रोक्षितैर्जन्तुवर्जितैः॥
आत्मारामोद्भवैर्मुख्यैर्भक्त्या संपूजयेत्सुरान् ५०
त्यजेत्कीटावपन्नानि शीर्णपर्युषितानि च ॥
स्वयं पतितपुष्पाणि मलाद्युपहतानि च ॥५१॥
मुकुलैर्नार्चयेद्देवमपक्वैः कृमियुक्फलैः ॥
पुष्पाभावे पत्रपूजा पत्रालाभे फलैरपि ॥५२॥
निवेदयेत्फलालाभे तृणगुल्मौषधीरपि ॥
समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ॥
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥५३॥

लक्षपुष्पार्चनं क्रयक्रीतैरपि केचिद्धर्मार्जितधनक्रीतैर्यः कुर्यात्केशवार्चनम् ॥ न पर्युषितदोषोस्ति

मालाकारगृहेषु चेत्याद्युक्तेर्मालाकारानीतैः क्रयक्रीतैरपि पुष्पपत्रैः पूजयन्ति ॥ नित्यपूजार्थंपरोपवनादेरपि पुष्पादिग्रहे चौर्यदोषोन ॥ पूजार्थं पुष्पादि न याचेत् ॥ समित्पुष्पकुशादीनि वहंतं नाभिवादयेत् । तद्धारी चैव नान्यान् हि निर्माल्यं तद्भवेत्तयोः ॥ देवोपरि धृतं वामहस्तेधोवस्त्रे च धृतं जलेन्तःक्षालितं पुष्पं निर्माल्यम् ॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् । न वर्ज्यं तुलसीपत्रं न वर्ज्यं तीर्थजं जलम् ॥ प्रहरं तिष्ठते जाती करवीरमहर्निशम् । नैवपर्युषितं पद्म तुलसीविल्वपत्रकम् ॥ कुन्दं च दमनं चैवागस्त्यं च कलिका तथा ॥ विल्वादेरपर्युषितत्वदिनसंख्या विल्वः ३० अपामार्गः ३ जाती१ तुलसी ६ शमी ६ शतावरी ११ केतकी ४ भृंगराजः ९ दूर्वा ८ मन्दारः १ पद्मम् १ नागकेसरः २ दर्भा ३०अगस्त्यः३ तिलः १ मल्लिका ४ चंपकः ९ करवीरम् ८ एतेषामेतद्धि नोत्तरं पर्युषितत्वम् ॥ अथ विष्णोः प्रियाणि मालतीजातीकेतकीमल्लिकाशोक-

१ जुई । २ कनेर । ३ चमेली । ४ मोगरी ।

चंपकपुन्नागबकुलोत्पलकुन्दकरवीरपाटलातगरपुष्पाणि ॥ अन्यानि च सुरभीणि विष्णोः प्रियाणि अपामार्गभृंगराजखदिरशमीदूर्वाकुशदमनकाबिल्वतुलसीपत्राण्युत्तरोत्तराधिकप्रियाणि तुलसी सर्वाधिका जातीपुष्पसहस्रेण मालार्पणे कल्पकोटिसहस्रं विष्णुपुरे वासः आम्रमञ्जर्या पूजने गोकोटिदानफलम् । अथ शिवस्य, चतुर्णां पुष्पजातीनां गन्धमाघ्राति शङ्करः । अर्कस्य करवीरस्य बिल्वस्य च बकस्य च। दश सुवर्णदानफलं श्वेतार्कपुष्पं ततः सहस्रगुणं बकपुष्पं एवं धत्तूरशमीपुष्पद्रोणपुष्पनीलोत्पलानामुत्तरोत्तराणां सहस्रगुणत्वम् । मणिमुक्ताप्रवालैस्तु रत्नैरप्यर्चनं कृतम् ॥ न गृह्णामि विना देवि बिल्वपत्रैर्वरानने । सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम् ॥ नीलोत्पलसहस्रेणमालार्पणे कल्पकोटिसहस्रं शिवपुरे वासः धत्तूरैर्बृहतीपुष्पैश्च पूजने गोलक्षफलं पाटलामंदारापामार्गजातीचम्पकोशीरतगरनागकेसरपुन्नागजपामल्लि

१ मूंगा । २ बड़ीकटहली । ३ खस ।

सहकारकुसुंभपुष्पाणि शिवप्रियाणि धत्तूराणिकदंवानि रात्रौ देयानि शङ्करे ॥ अथ निषिद्धानि बन्धूककुन्दातिमुक्तकेतकीकपित्थवकुलशिरीषनिम्बानि ॥ पक्वाम्रफलस्य शिवार्पणे वर्षायुतं शिवपुरे वासः

अथ शिवनिर्माल्यग्रहणविचारः ।

अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ॥
शालग्रामशिलासंगात्सर्वं याति पवित्रताम् ॥ १ ॥

शैवसौरनैवेद्यभक्षणे चान्द्रायणम् अभ्यासे द्विगुणं मत्याभ्यासे सान्तपनम् । अन्यनिर्माल्येप्यनापद्येवम् ॥ इदं च ज्योतिर्लिंगस्वयंभूलिंगासिद्धप्रतिष्ठापितलिंगातिरिक्तस्थावरलिंगविषयम् ॥ ज्योतिर्लिंगादौ तु पूजकेन दत्तं फलतीर्थादिकं भक्त्या शुद्ध्यर्थं ग्राह्यं न लोभेन पंचायतनस्थितलिंगेषु चरेषु प्रतिमासुचान्नादेरपि स्वयं ग्रहणेपि न दोषः ज्योतिर्लिंगाद्यन्यस्थिरलिंगेषु तीर्थोदकचन्दनमात्रं श्रद्धावद्भिः शिवोपासकैरेव ग्राह्यम् । ज्योतिर्लिंगादौ पूजकदत्तमन्नमपि भक्ष्यमिति केचित् ॥

देवस्पर्शेऽनधिकारः ॥ नारदीये ।

स्त्रीणामनुपनीतानां शूद्राणां च नराधिप ॥

१ आंबा । २ दुपहरिया ॥

स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च ॥१॥
शूद्रोवाऽनुपनीतोवा स्त्री वापि पतितोऽपि वा ॥
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥२॥

धर्मसिन्धौ । पुराणप्रसिद्धजीर्णलिंगं स्त्रीशूद्रै-रपिपूज्यम् । नूतनस्थापितं लिंगं स्त्री शूद्रोवापि न स्पृशेत् ॥ शिवादिप्रतिष्ठायां स्त्रीशूद्रादेर्नाधिकारः स्थिरप्रतिमाः प्राङ्मुखीरुदङ्मुखोर्यजेत् ॥ चलप्र-तिमासु प्राङ्मुखः ॥

स्कांदे । शालग्रामशिलायास्तु प्रतिष्ठा नैवविद्यते ३
भविष्ये । वाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये ।
न प्रतिष्ठा न संस्कारस्तेषां चावाहनं तथा ॥४॥

पंचामृतम् ॥ धन्वन्तरिः ।

गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् ॥
एकत्र मिलितं ज्ञेयं दिव्यं पंचामृतं परम् ॥५॥
वार्तिके । नांगुष्ठैर्मर्दयेद्देवं नाऽधः पुष्पैः समर्चयेत् ॥
कुशाग्रैर्न क्षिपेत्तोयं वज्रपातसमं भवेत् ॥६॥
आ. द. यमः । देवमाल्यापनयनं देवागारसमूहनम् ॥

स्नपनं सर्वदेवानां गोप्रदानसमं स्मृतम् ॥ ७ ॥

तत्रैव लघुहारीतः ।

स्नानं कृत्वा तु ये केचित्पुष्पं गृह्णन्ति वै द्विजाः ॥
देवतास्तत्र गृह्णन्ति भस्मी भवति दारुवत् ॥८॥

तत्रैव देवीपुराणे ।

शिवे विवर्जयेत्कुन्दमुन्मत्तं च हरेस्तथा ॥
देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा ॥९॥
आ॰सू॰।वस्त्रानीतं करानीतं स्वयं पतितमेव च ॥
ऐरण्डपत्रैरानीतं न तस्य फलभाग्भवेत् ॥१०॥
अक्षतैर्नार्चयेद्विष्णुं न तुलस्या विनायकम् ॥
न दूर्वया यजेद्दुर्गां नोन्मत्तेन दिवाकरम् ॥११॥

धूपः शारदायाम् ।

गुग्गुलं सरलं दारु पत्रं मलयसम्भवम् ॥
ह्रीवेरमगुरुं कुष्ठं गुडं सर्जरसंघनम् ॥१२॥
हरीतकीं नखीं लाक्षां जटामांसीं च शैलजाम् ॥
षोडशाङ्गं विदुर्धूपं दैवे पैत्र्ये च कर्मणि ॥१३॥
यथा गन्धं तथा देवि धूपं दद्याद्विचक्षणः ॥

मध्यमानामिकाङ्गुल्योर्मध्यभागे विधारयेत् ॥ १४ ॥
अंगुष्ठाऽग्रेण देवेशि धृत्वा धूपं निवेदयेत् ॥
तथा समर्पयेद्धूपं घण्टावाद्यजयस्वनैः ॥ १५ ॥
का.पु. नामिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् ॥
घृतेन दीपकं नित्यं तिलतैलेन वा पुनः ॥ १६ ॥

देवतानैवेद्यार्पणविधिः ॥ आश्वलायनः ।

वैश्वदेवं पुरा कृत्वा नित्ये चाभ्युदये तथा ॥
स्वाभीष्टदेवतादिभ्योनैवेद्यं च निवेदयेत् ॥ १७ ॥
अकृत्वा वैश्वदेवं तु नैवेद्यं योनिवेदयेत् ॥
तदन्नं न च गृह्णन्ति देवाविष्णवादयोध्रुवम् ॥ १८ ॥

प्रदक्षिणाविचारः बहृचपरिशिष्टे ।

एकां विनायके कुर्याद्द्वे सूर्ये तिस्रईश्वरे ॥
चतस्रः केशवे कुर्यात्सप्ताश्वत्थे प्रदक्षिणाः ॥ १९ ॥
अन्यत्र। एका चण्ड्या रवेःसप्त तिस्रःकार्याविनायके
हरेश्चतस्रः कर्तव्याः शिवस्यार्धप्रदक्षिणा ॥ २० ॥
अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणाम् ॥
सव्याऽपसव्यंगृहिणामेवं शम्भोःप्रदक्षिणा ॥ २१ ॥

आग्नेय्येऽसव्यं व्रजेत्ततोऽसव्यं प्रनालं नैव लंघयेत्॥

साष्टांगनमस्कारः।

ग्रन्थान्तरेऽउरसा शिरसा दृष्ट्या मनसा वचसा तथा।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्गउच्यते २ ३

धर्मसिन्धौ नमस्कारप्रकारः।

शिरोमत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्॥२४॥
इति वदन्नमेत् ॥

देवतीर्थविचारः ॥ हलायुधे।

शिला ताम्रं तथा तोयं शंखःपुरुषसूक्तकम्॥
गन्धं घण्टा च तुलसीत्यष्टांगं तीर्थमुच्यते॥२५॥
स्कान्दे।कुंकुमं चन्दनं पत्रं नैवेद्यं सुसमं जलम् ॥
शालग्रामशिलालग्नं तीर्थं कोटिशताधिकम् २६
भविष्ये।विष्णुपादाभिषिक्तं यःपात्रेणैव पिबेज्जलम्
सर्वपापविनिर्मुक्तः सयाति परमां गतिम् ॥२७॥
यःपादसलिलं विष्णोः करेण पिबते यदि ॥
समूढोनरकं याति यावदिन्द्राश्चतुर्दश ॥२८॥

पुलस्त्यः।शालग्रामशिलावारि सोमपानं दिने दिने
पात्रान्तरेण तद्ग्राह्यं करेण सुरया समम् ॥ २९॥
अग.।शालग्रामशिलातोयमपीत्वा यस्तु मस्तके॥
प्रक्षेपणं प्रकुर्वीत ब्रह्महा सनिगद्यते ॥ ३०॥
धर्मसि.।पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम्
द्वादश्यां पयसा स्नाप्य हरिसायुज्यमश्नुते॥ ३१॥

निर्माल्यग्रहणविचारः। आचारादर्शे।

ब्रह्मांगलग्नं विप्रेभ्योवैष्णवं च प्रदीयते ॥
रुद्रांगलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात् ॥३२॥
शिष्टेभ्योप्यथ देवेभ्योयत्तु दीनेषु निक्षिपेत्॥
विष्णुदेहपरामृष्टं माल्यं पापहरं स्मृतम् ॥
योनरः शिरसा धत्ते सयाति हरिमंजसा ॥ ३३॥

नवविधा भक्तिः कपिलगतायाम् ।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥३४॥
परीक्षिच्छ्रवणं चक्रे कीर्तनं नारदः शुकः ॥
स्मरणं शिवप्रह्लादौ लक्ष्मीश्च पादसेवनम्॥३५॥

अर्चनं पूजनं ध्यानं पृथूराजादिभिः कृतम् ॥
वन्दनं तूद्धवाक्रूरौ दास्यं तार्क्ष्यहनूमतौ ॥३६॥
सख्यमर्जुनकर्तव्यं बलेश्चात्मनिवेदनम् ॥
भक्तिंनवविधां कृत्वा कैवल्यं प्राप्यते परम् ॥३७॥

अथ गुर्वादिपूजनम् ।

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ॥इतिश्रुतिः॥
मातृदेवोभव पितृदेवोभव आचार्यदेवोभव
अतिथिदेवोभव इत्यपि श्रुतिः ॥
मनुः।आचार्योब्राह्मणोमूर्तिः पिता मूर्तिःप्रजापतेः
माता पृथिव्यामूर्तिस्तु भ्राता स्वोमूर्तिरात्मनः ३८
आचार्यश्च पिता चैव माता भ्राता च पूर्वजः॥
नार्तेनास्यावमन्तव्या ब्राह्मणेन विशेषतः ॥३९॥

अथ मानसपूजास्तोत्रम् ।

रत्नैः कल्पितमासनं हिमजलैःस्नानं च दिव्याम्बरं।
नानारत्नविभूषितं मृगमदामोदान्वितं चन्दनम्॥
जातीचंपकबिल्वपत्रसहितं पुष्पं च धूपं तथा,
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥१॥

सौवर्णे मणिरत्नखण्डरचिते पात्रे घृतं पायसं,
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पायसम्॥
शाकानामयुतं जलं रुचिकरं सुस्निग्धशाल्योदनं,
ताम्बूलं मनसा मया विरचितं पूजां फलं स्वीकुरु॥२
छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं,
वीणाभेरिमृदङ्गकाहलकलागीतं च नृत्यं तथा ॥
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा चैतत्समस्तं मया,
संकल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ३
आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं,
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः
संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वागिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ४
करचरणकृतं वाक्कायजं कर्मजं वा,
श्रवणनयनजं वा मानसं वाऽपराधम् ॥
विहितमविहितं वा सर्वमेतत्क्षमस्व,
जय जय करुणाब्धे श्रीमहादेव शम्भो॥५॥इति

अथ क्षमापनम् ।

आवाहनं न जानामि न जानामि तवार्चनम् ॥
पूजां चैव न जानामि क्षमस्व परमेश्वर ॥ १ ॥
अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥
तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर ॥ २ ॥
गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ॥
आगता सुखसम्पत्तिः पुण्याच्च तव दर्शनात् ॥ ३ ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ ४ ॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ॥
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ ५ ॥

त्वद्यात्रया व्यापकताहता ते, ध्यानेन चेतःपरताहता ते ॥ स्तुत्या मया वाक्परता हता ते, क्षमस्व नित्यं त्रिविधापराधान् ॥ ६ ॥

शूद्रस्थापितलिंगादौ विचारः ॥ नारदीये ।

यः शूद्रेणार्चितं लिंगं विष्णुं वा प्रणमेन्नरः ॥
न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि ॥ १ ॥

नमेद्यः शूद्रसंस्पृष्टं लिंगं वा हरिमेव वा ॥
ससर्वयातनाभोगी यावदाचन्द्रतारकम् ॥ २ ॥
पाखण्डपूजितं लिंगं नत्वा पाखण्डतां व्रजेत् ॥
आभीरपूजितं लिंगं नत्वा नरकमश्नुते ॥ ३ ॥
योषिद्भिःपूजितं लिंगं विष्णुंवापि नमेत्तुयः ॥
सकोटिकुलसंयुक्तमाकल्पंरौरवं वसेत् ॥ ४ ॥ इति ॥

अथ वैश्वदेवविचारः ॥ ११ ॥ वृ.पा. ।

हाविष्यस्य द्विजोभावे यथालाभं शृतं हविः ॥
जुहुयाद्विधिवद्भक्त्या तथा स्याच्चित्तनिर्वृतिः ॥ १ ॥
यद्वा तद्वापि होतव्यमग्नौ किञ्चिद्द्विजातिभिः ॥
फलं वा यदिवा मूलं घासं दारु तथा पयः ॥ २ ॥
अहुत्वा न द्विजोऽश्नीयाद्यत्किंचित्स्वयमाशृतम् ॥
अश्नीयाच्चेदहुत्वापि नरकं प्रतिपद्यते ॥ ३ ॥
जुहुयाद्व्यंजनक्षारवर्जमन्नं हुताशने ॥
अनुज्ञातोद्विजस्तैस्तु त्रिः कृत्वा पुरुषर्षभः ॥ ४ ॥
यच्चाग्नौ हूयते नैव यस्य वान्नं न दीयते ॥

अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत्
लौकिके वैदिके वापि वैश्वदेवोहि नित्यशः ॥
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥६॥
अभावादग्निहोत्रस्य तथा चावसथस्य च ॥
यस्मिन्नग्नौ पचेदन्नं तत्र होमोविधीयते ॥ ७॥
जुहुयात्सर्पिषा भक्तं गव्येन पयसा तथा ॥
क्रीतेन गोविकारेण तिलतैलेन वा पुनः ॥ ८ ॥
संप्रोक्ष्य पयसा वापि नाभ्यक्तं नाश्नुयादपि ॥
निःस्नेहायवगोधूमशालयोहवनीयकाः ॥ ९ ॥
हविस्त्वहविरभ्यक्तमहाविस्तु हविर्यतः ॥
अभ्यक्तमेव होतव्यमतोरूक्षं विवर्जयेत् ॥
दारिद्र्यं श्वित्रितामेके रूक्षान्नहवने विदुः॥१०॥
ओंकारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा ॥
जुहुयादग्निकोविप्रोगृहमेधी हि नित्यशः॥११॥
दक्षस्मृ०।सन्ध्याकर्मावसाने तु स्वयं होमोविधीयते
स्वयं होमे फलं यत्तु तदन्येन न जायते ॥१२ ॥

ऋत्विक् पुत्रोगुरुर्भ्राता भागिनेयोऽथ विट्पतिः॥
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव तु ॥१३॥
देवकार्याणि पूर्वाह्णे मनुष्याणां तु मध्यमे ॥
पितृणामपराह्णे तु कार्याण्येतानि यत्नतः॥१४॥
पौर्वाह्णिकं तु यत्कर्म यदि तत्सायमाचरेत् ॥
न तस्य फलमाप्नोति बन्ध्यास्त्रीमैथुनं यथा॥१५॥
अत्रिस्मृ. अजागावोमहिष्यश्च अमेध्यंभक्षयन्ति याः
दुग्धं हव्ये च कव्ये च गोमयं न विलेपयेत् १६
ऊनस्तनी अधीका वा या च स्वस्तनपायिनी॥
तासां दुग्धं न होतव्यं हुतं चैवाहुतं भवेत् ॥१७॥
वैदिके लौकिके वापि हुतोच्छिष्टे जले क्षितौ॥
वैश्वदेवं प्रकुर्वीत पञ्चसूनापनुत्तये ॥१८॥
का. स्मृ. ।हविष्येषु यथा मुख्यास्तदनुव्रीहयः स्मृताः
माषकोद्रवगौरादिसर्वालाभेऽभिवर्जयेत् ॥ १९ ॥

पाण्याहुतिर्द्वादश पर्व्वपूरिका, कंसादिना चेत्स्रुवमात्रपूरिका ॥ दैवेन तीर्थेन च हूयते

हविः, स्वंगारिणि स्वर्चिषि तच्च पावके॥२०॥
योऽनर्चिषि जुहोत्यग्नौ व्यंगारिणि च मानवः ॥
मन्दाग्निरामयावी च दरिद्रश्च सजायते॥२१॥
तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ॥
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं पराम्॥२२
होतव्ये च हुते चैव पाणिसूपस्फ्यदारुभिः॥
न कुर्यादग्निधमनं कुर्याद्वा व्यंजनादिना ॥२३॥
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत॥
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तम्॥२४
सायं प्रातर्वैश्वदेवः कर्तव्योबलिकर्म च ॥
अनश्नतापि सततमन्यथा किल्विषी भवेत्॥२५॥
वैश्वदेवे त्वतिक्रान्ते अहोरात्रमभोजनम् ॥
प्रायश्चित्तमथोहुत्वा पुनः संतनुयाद्व्रतम् ॥२६॥
होमद्वयात्यये दर्शपौर्णमासात्यये तथा ॥
पुनरेवाग्निमादध्यादिति भार्गवशासनम्॥२७॥
अत्रिस्मृ॰। घृतं वा यदि तैलंवा पयोवा यदि वा दधि

चत्वारोह्याज्यसंस्थानहुतं नैव तु वर्जयेत् ॥२८॥
याज्ञव.।देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत्॥
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् २९
आ.द.।एकपाके निवसता पितृदेवद्विजार्चनम् ॥
एकम्भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥ ३०॥

तत्रैव वायुपुराणे ।

दानं प्रतिग्रहोहोमोभोजनं बलिरेव च ॥
सांगुष्ठेन सदा कार्यमासुरं ह्यन्यथा भवेत् ॥ ३१॥

आ० सू० ॥ गृह्ययज्ञकल्पावलौ ।

न चुल्ल्यामायसे पात्रे न भूमौ न च खर्परे ॥
वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा ॥३२॥

विश्वामित्रकल्पे ।

कोद्रवं चणकं माषं मसूरंच कुलत्थकम् ॥
क्षारं च लवणं चैव वैश्वदेवे विवर्जयेत् ॥३३॥
अन्नं पर्युषितं चैव परान्नं दूषितं तथा ॥

दग्धमन्नं तथोच्छिष्टं वैश्वदेवे विवर्जयेत् ॥ ३४ ॥
पट्टकेन भवेद्व्याधिः शूर्पेण धननाशनम् ॥
पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन तु ॥ ३५ ॥

वैश्वदेवे कुण्डम् ॥ यज्ञपार्श्वे ।

दशाङ्गुलं तु दैर्घ्येण विस्तारे चतुरङ्गुलम् ॥
षडङ्गुलं तु उच्छ्राय मेखला द्व्यङ्गुला मता ॥ ३६ ॥
वृत्तं वा चतुरस्रं वा कुण्डं स्याद्वैश्वदेविकम् ॥

गृह्ययज्ञकल्पावलौ ।

षडङ्गुलमथोच्छ्रायं गर्तं च चतुरङ्गुलम् ॥
द्वादशाङ्गुलदीर्घं स्यात्कुण्डं तद्वैश्वदेविकम् ॥ ३७

अथ अतिथिपूजनविचारः ॥ १२ ॥ अतिथिलक्षणम् ।

एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ॥
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ १ ॥
याज्ञव० । अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ २ ॥
बृ० पा० । अदृष्टोऽश्रुतपूर्वादिरज्ञाताचारविद्यकः ॥

सन्ध्यामात्रकृताचारस्तज्ज्ञैः सोऽतिथिरुच्यते ॥ ३
क्षुत्तृषणाध्वपरिश्रान्तः प्राणत्राणान्नयाचकः ॥
गृहीतपात्रमात्रः सन्गृहद्वारमुपागतः ॥ ४ ॥
विष्णुरूपोतिथिः सोयमुत्तारार्थमुपागतः ॥
इति मत्वा महाभक्त्या वृणुयाद्भोजनायतम् ॥ ५
त्वं पुण्येन ममायातःसर्वदेवमयोतिथिः ॥
निर्दह्य सर्वपापानि ममायं संप्रयास्यति ॥ ६ ॥
ब्राह्मणैः सह भोज्योसौ भक्त्या प्रक्षाल्य पादद्वयम्
आसनार्चादिकं दत्वा कृत्वा स्त्रक्चन्दनादिकम् ७
यतिर्व्रत्यग्निहोत्री च तथा च मखकृद्द्विजः ॥
सदैतेऽतिथयः प्रोक्ताअपूर्वाश्च दिने दिने ॥ ८ ॥
मनुरपि।अप्रणोद्योऽतिथिः सायं सूर्योढोगृहमेधिना
काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत्॥ ९॥
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्॥
धन्यं यशस्यमायुष्यं स्वर्ग्यं वातिथिपूजनम् १०

आसनावसथौ शय्यामनुव्रज्यामुपासनाम् ॥
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥११॥
वैश्वदेवे तु निवृत्ते यद्यन्योऽतिथिराव्रजेत् ॥
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥१२
महाभा.।गृहस्थस्यहिधर्मोऽन्यःसंप्राप्तातिथिपूजनम्
अतिथिपूजितोयस्य गृहस्थस्य तु गच्छति॥
नान्यस्तस्मात्परोधर्मः इति प्राहुर्मनीषिणः ॥१३॥
अतिथिपूजितो यद्धि ध्यायते मनसा शुभम् ॥
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥ १४॥
शंखस्मृ.यथाभर्ताप्रभुःस्त्रीणांवर्णानांब्राह्मणोयथा॥
अतिथिस्तद्वदेवास्य गृहस्थस्य प्रभुः स्मृतः॥१५॥
न व्रतैर्नोपवासैश्च धर्मेण विविधेन च ॥
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्॥१६॥
न व्रतैर्नोपवासैश्च न च यज्ञैः पृथग्विधैः ॥
राजा स्वर्गमवाप्नोति प्राप्नोति परिपालनात्॥१७॥
न स्नानेन न मौनेन नैवाग्निपरिचर्यया ॥

ब्रह्मचारी दिवं याति संयाति गुरुपूजनात् ॥१८॥
नाग्निशुश्रूषया क्षान्त्या स्नानेन विविधेन च ॥
वानप्रस्थो दिवं याति याति भोजनवर्जनात्॥ १६ ॥
न दण्डैर्न च मौनेन शून्यागाराश्रयेण च ॥
यतिः सिद्धिमवाप्नोति योगेनाप्नोत्यनुत्तमम् ॥२०॥
न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा ॥
गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात्॥ २१॥
तस्मात्सर्वप्रयत्नेन गृहस्थोऽतिथिमागतम् ॥
आहारशयनाद्येन विधिवत्प्रतिपूजयेत् ॥ २२॥
गौतमः। असमानग्रामीणोऽतिथिरेकरात्रिकः॥
एकरात्रिकस्तर्हिनागतः ॥ पूर्वन्तु द्वितीयदिना-
दावपि वासनम्फलार्थमुक्तम् ॥ २३ ॥

शातातपः आचारादर्शे ।

अचिन्तितमनाहूतं देशकालउपस्थितम् ॥
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः २४
मनुः। नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा ॥
उपस्थितं गृहे विद्याद्भार्यायत्राग्नयोऽपि वा ॥ २५॥

न ब्राह्मणस्य त्वतिथिर्गृहे राजन्यउच्यते ॥
वैश्यशूद्रौ सखा चैव ज्ञातयोगुरुरेव च ॥२६॥
वृ·पा·।नैकाश्रमे वसन्विप्रोमुनीन्द्रैरुच्यते तिथिः॥
अन्यत्र पूर्वदृष्टोयोनासावातिथिरुच्यते ॥२७॥
क्षत्रियोपि यथा गच्छेदतिथित्वेन वेश्मनि ॥
भुक्तेषु सत्सु विप्रेषु कामतस्तु तमाशयेत् ॥२८॥
वैश्योवा यदि वा शूद्रोविप्रगेहं समाव्रजेत् ॥
सभृत्यैः सह भोक्तव्यइति पाराशरोवदत् ॥२९॥
विष्णुस्मृ·कुर्याच्छूद्रस्तु शुश्रूषां ब्रह्मक्षत्रविशां क्रमात्
कुर्यादुत्तरयोर्वैश्यः क्षत्रियोब्राह्मणस्य तु ॥३०॥
वृ·पा·क्लीबोवा यदि वा काणःकुष्ठीवाव्याधितोपि वा
आगतोवैश्वदेवान्ते द्रष्टव्यः सर्वदेववत् ॥ ३१ ॥
इष्टोवा यदि वा द्वेष्योमूर्खः पण्डितएव वा ॥
संप्राप्ते वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः॥३२॥
चोरोवा यदि चाण्डालःशत्रुर्वा पितृघातकः॥
वैश्वदेवे तु संप्राप्ते सोऽतिथिः स्वर्गसंक्रमः॥३३॥

आचा॰यमः। न पृच्छेद्गोत्रं चरणं देशन्नामकुलं श्रुतम्
अध्वनोऽभ्यागतं विप्रं भोजने समुपास्थितम्॥ ३४॥
मनुः। न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्॥
भोजनार्थं हि ते शंसन्वान्ताशीत्युच्यते बुधैः ३५
ब्रह्मपु॰। यः पात्रपूरणीं भिक्षां यतिभ्यः संप्रयच्छति॥
विमुक्तः सर्वपापेभ्योनासौ दुर्गतिमाप्नुयात्॥ ३६॥
मनुः। यत्पुण्यफलमाप्नोति गां दत्वा विधिवद्गुरोः॥
तत्पुण्यफलमाप्नोति भिक्षां दत्वा द्विजोगृही॥ ३७॥

आचा॰आपस्तंबः। एकरात्रिं चेदतिथिं वासयेत्पार्थिवींल्लोकानभिजयति॥ द्वितीयामान्तरिक्षान् तृतीयां दिव्यान् चतुर्थीं पारवतोलोकानपरिमितिपरिमितान् जयतीति प्रत्यभिज्ञायते॥

लघुपाराशरौ।

दद्याच्च भिक्षात्रितयं परिव्राट् ब्रह्मचारिणाम्॥
इच्छया च ततोदद्याद्विभवे सत्यवारितम्॥ ३८॥

कठोपनिषदि। आशाप्रतीक्षे सङ्गतं सूनृतां

चेष्टापूर्त्ते पुत्रपशूंश्च सर्वान्॥ एतद्वृङ्क्ते पुरुषस्या-
ल्पमेधसोयस्यानश्नन् वसति ब्राह्मणोगृहे ॥४०॥

भगवानाह ।

भुंजते ते त्वघं पापाये पचन्त्यात्मकारणात् ॥

महाभारते ।

पात्रं त्वतिथिमासाद्य शीलाढ्यं योन पूजयेत् ॥
सदत्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति॥४१॥
मनुः।शिलानप्युञ्छतोनित्यं पञ्चाग्नीनपि जुह्वतः॥
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितोवसन् ॥४२॥
ल.पारा.।अतिथिर्यस्य भग्नाशोगृहात्प्रतिनिवर्तते॥
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्चच॥४३॥
काष्ठभारसहस्रेण घृतं कुम्भशतेन च ॥
अतिथिर्यस्य भग्नाशस्तस्य होमोनिरर्थकः ॥४४॥
मनुः।पाषण्डिनोविकर्मस्थान् वैडालव्रतिकाञ्छठान्
हैतुकान्वकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥४५॥
अत्रिस्मृ.यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलम्
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥४६॥

ल.पारा.।ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः॥
अध्वगःक्षीणवृत्तिश्च षडेते भिक्षुकाःस्मृताः॥४७॥
धर्मसि.।ब्रह्मचारी यत्तिश्चैव विद्यार्थी गुरुपोषकः॥
अध्वगःक्षीणवृत्तिश्च षट्पक्वान्नस्य भिक्षुकाः ४८
ल.पा.।यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ
तयोरन्नमदत्वा च भुक्त्वा चान्द्रायणं चरेत् ४९
हारीतस्मृ.। अदृष्टपूर्वमज्ञातमातिथिं प्राप्तमर्चयेत्॥
स्वागतासनदानेन प्रत्युत्थानेन चाम्बुना ॥५०॥
स्वागतेनाग्नयस्तुष्टा भवन्तिगृहमेधिनः ॥
आसनेन तु दत्तेन प्रीतोभवति देवराट् ॥५१॥
पादशौचेन पितरःप्रीतिमायान्ति दुर्लभाम्॥
अन्नदानेन युक्तेन तृप्यते हि प्रजापतिः ॥५२॥
तस्मादतिथये कार्य्यं पूजनं गृहमेधिना ॥
भक्त्या च शक्तितोनित्यं पूजयेद्विष्णुमन्वहम् ५३
भिक्षां च भिक्षवे दद्यात्परिव्राड् ब्रह्मचारिणे ॥
अकल्पितान्नादुद्धृत्य सर्व्यं जनसमान्विताम् ५४

अकृते वैश्वदेवेपि भिक्षौ च गृहमागते ॥
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विवर्जयेत् ॥५५॥
वैश्वदेवात्कृतान्दोषाञ्छक्तो भिक्षुर्व्यपोहितुम् ॥
न हि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति ॥५६॥
तस्मात्प्राप्ताय यतये भिक्षां दद्यात्समाहितः ॥
विष्णुरेव यतिच्छायइति निश्चित्य भावयेत् ।५७।

आचा० ॥ मार्कण्डेयपुराणे ।

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् ॥
अग्राच्चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥५८॥
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ॥
अदत्त्वा तु न भोक्तव्यं यथा विभवमात्मनः॥५९॥
त.यमः।हस्तदत्ता च या भिक्षा व्यंजनं सलिलानिच
भुक्त्वा त्वशुचितांयाति दाता स्वर्गं न गच्छाति६०
तथा। दिवा तिथौ तु विमुखे गते यत्पातकन्नृणाम्
तदेवाष्टगुणं पुंसां सूर्योढे विमुखे गते ॥ ६१ ॥
विष्णुः। प्रतिश्रयं तथा शय्याम्पादाभ्यंगं सदीपकम्

प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम् ॥६२॥
देवलः। नाघृतं भोजयेद्विप्रं स्वगृहे सति सर्पिषि॥
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥६३॥
मिष्टमन्नं स्वयं भुक्त्वा पश्चात्कदशनं लघु॥
ब्राह्मणं भोजयेन्मूर्खोनिरये चिरमाविशेत् ॥६४॥
ग्रन्थान्तरे। यतिर्यस्य गृहेभुंक्ते तस्य भुंक्त स्वयंहरिः॥
हरिर्यस्य गृहे भुंक्ते तस्य भुंक्ते जगत्त्रयम् ॥६५॥
लघुपा.। यतये कांचनं दत्वा ताम्बूलं ब्रह्मचारिणे॥
चौरेभ्योप्यभयं दत्वा दातापि नरकं ब्रजेत् ॥६६॥
शुक्लवस्त्रं च यानं च ताम्बूलं धातुमेव च ॥
प्रतिगृह्य कुलं हन्यात्प्रतिगृह्णाति यस्य च ॥६७॥
संवर्त्तः। ब्रह्मचारी यतिभ्यस्तु वपनं यस्तु कारयेत्॥
नखकर्मादिकं चैव चक्षुष्मान् जायते नरः॥६८॥
ल.पारा.-यस्यच्छत्रं हयैश्चैव कुंजरोहसमृद्धिमत्॥
ऐन्द्रस्थानमुपासीत तस्मात्तं न विचारयेत् ॥६९

बृहत्पाराशरौ ।

स्नात्वा जप्त्वा च हुत्वा च शक्त्या दत्वा च योऽश्नुते

सोऽमृतं नित्यमश्नाति तस्य स्नानमनामयम्॥७०॥
अस्नात्वाश्नन् मलं भुङ्क्ते अजप्त्वा पूयशोणितम्॥
अजुह्वच्च कृमीन् कीटानदद्च्च शकृत्तथा॥७१॥
योतिथिं पूजयेद्भक्त्या पूर्वमभ्यागतं तथा॥
बालवृद्धादिकं चैव तस्य विष्णुः प्रसीदति॥७२इति

अथ श्राद्धविचारः॥ १३ ॥श्राद्धशब्दार्थः॥ धर्मसिन्धौ।

पित्रादीन्मृतानुद्दिश्य विहिते काले देशे पक्वान्नामान्नहिरण्यान्यतमद्रव्यस्य विधिना दानं श्राद्धम्॥ तत्राग्नौ करणं पिण्डदानं ब्राह्मणभोजनं च प्रधानम्॥ तदुक्तं। होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम्। श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकामिति॥ क्वचिद्वचनादशक्त्या वा पिण्डदानाद्यकरणे ब्राह्मणभोजनादिमात्रमपि श्राद्धपदार्थःसंपद्यतइति चतुर्थपादार्थः तथा च वचनान्तरम्। यजुषां पिण्डदानं तु बह्वृचानां द्विजार्चनम्। श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम्॥ अश्रद्धया पितरो न सन्तीति मत्वा श्राद्धमकुर्वाणस्य रक्तं पितरः पिबन्ति॥

श्राद्धे कालाः॥ वृ०पा०।

श्राद्धं वृद्धावचन्द्रे भच्छायाग्रहणसंक्रमे॥

व्यतीपाते च विषुवे कृष्णे यात्रार्थलाङ्घषु॥१

हेमाद्रौ बृहन्मनुः ।

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ॥
यद्यमा रविवारेण व्यतीपातःसउच्यते ॥ २
बृ.पा.।अष्टकास्त्वयने द्वन्द्वे श्राद्धं प्रति यदा रुचिः
पुण्यः श्राद्धस्य कालोयमृषिभिः परिकीर्तितः॥३
युगादिषु च कर्तव्यं तथा मन्वन्तरादिषु ॥
कथितः श्राद्धकालोयं मन्वाद्यैर्धर्मवक्तृभिः ॥ ४
नवान्नेन च तोयेन नवच्छत्रगृहे तथा ॥
न वैक्षत्रेषु वाञ्छन्ति पितरोपि मघास्वपि ॥५

श्राद्धे निमन्त्रणीयब्राह्मणसंख्याः ॥ मनुः ।

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ॥
भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ ६
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदः ॥
पञ्चैतान्विस्तरोहन्ति तस्मान्नेहेत विस्तरम्॥७

१ आश्लेषा । २ मृगशिर ॥

न ब्राह्मणं परीक्षेत दैवे कर्माणि धर्मवित् ॥
पित्र्ये कर्माणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥८॥
केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः ॥
कथंचिदप्यतिक्रामन्पापः सूकरतां व्रजेत् ॥९॥

श्राद्धे वर्ज्यब्राह्मणाः ॥ वृ० पा० ।

काणः पौनर्भवोरोगी पिशुनोवृद्धिजीवकः॥
कृतघ्नोमत्सरी क्रूरोमित्रध्रुक् कुनखोगदी ॥१०॥
वृद्धोप्रजननः श्वित्री श्यावदन्तावकीर्णिनः॥
हीनांगश्चातिरिक्तांगोविक्लवः परिविन्दकः ॥११॥
क्लीवाभिशस्तवाग्दुष्टभृतकाध्यापका स्तथा॥
कन्यादूषी वणिग्वृत्तिर्विनाग्निः सोमविक्रयी १२
भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकौ॥
पित्रादित्यागकृत्स्तेन वृषलीपतितज्जकाः ॥१३॥
अनुक्तवृत्तिस्त्वज्ञातः परपूर्वापत्तिस्तथा ॥
अजापालोमाहिषकः कर्मदुष्टाश्च निन्दिताः॥१४॥
योसत्प्रतिग्रहग्राही नित्यं यश्च प्रतिग्रही ॥
ग्रहसूचकदूतौ च पितृकार्येषु वर्जिताः ॥१५॥

प्रेतस्पृक्तैलनिर्णेक्ता वह्नुयाजकयाचकौ ॥
वककाकविडालाश्च शूद्रवृत्तिश्च गर्हितः ॥१
वाग्दुष्टोबालदुष्टोवा नित्यमप्रियवाक्च यः ॥
आसक्तोद्यूतकामादावतिवाक्चैव दूषितः ॥१
निराचाराश्च ये विप्राः पितृमातृविवर्जिताः ॥
विद्वांसोपि न तेभ्यर्च्याःपितृश्राद्धेषु मानवैः॥१
शंखस्मृ॰ब्राह्मणाये विकर्मस्थावैडालव्रतिकास्त
ऊनांगाअतिरिक्तांगाब्राह्मणाः पंक्तिदूषकाः ॥१
गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये॥
गुरूणां त्यागिनश्चैव ब्राह्मणाः पंक्तिदूषकाः॥२
अनध्यायेष्वधीयानाःशौचाचारविवर्जिताः॥
शूद्रान्नरससंपुष्टाब्राह्मणाः पंक्तिदूषकाः ॥२
आत्रि॰।न हीनांगोन रोगी च श्रुतिस्मृतिविवर्जि
नित्यं चानृतवादी च तांस्तु श्राद्धे न भोजयेत्
हिंसारतं च कपटं उपगुह्य श्रुतं च यः ॥
किंकरं कपिलं काणं श्वित्रिणं रोगिणंतथा ॥२

दुश्चर्माणं शीर्णकेशं पाण्डुरोगं जटाधरम् ॥
भारवाहिनं रौद्रं च द्विभार्यं वृषलीपतिम् ॥२४॥
भेदकारी भवेच्चैव वहुपीडाकरोपि वा ॥
हीनातिरिक्तगात्रोवा तमप्यपनयेत्तथा ॥२५॥
वहुभोक्ता दीनमुखो मत्सरी क्रूरबुद्धिमान् ॥
एतेषां नैव दातव्यः कदाचित्तु प्रतिग्रहः ॥२६॥
अथ चेन्मन्त्रविद्युक्तः शारीरैः पंक्तिदूषणैः ॥
अदुष्यन्तं यमः प्राह पंक्तिपावनएव सः ॥२७॥
श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते॥
काणःस्यादेकहीनोऽपि द्वाभ्यामन्धःप्रकीर्तितः २८
न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः॥
तस्यश्राद्धं न दातव्यं त्वन्धकस्यात्रिरब्रवीत्॥२९॥
ज्योतिर्विदोह्यथर्वाणः कीराः पौराणपाठकाः॥
श्राद्धयज्ञे महादाने वरणीयाः कदाचन ॥३०॥
श्राद्धं च पितरं घोरं दानं चैव तु निष्फलम्॥
यज्ञेच फलहानिः स्यात्तस्मात्तान्परिवर्जयेत् ॥३१

आविकश्चित्रकारश्च वैद्योनक्षत्रपाठकः ॥
चतुर्विप्रान पूज्यन्ते वृहस्पतिसमायदि ॥३
मागधोमाथुरश्चैव कार्पटः कीटकानजौ ॥
पञ्चविप्रान पूज्यन्ते वृहस्पतिसमायदि ॥३

श्राद्धे योग्यब्राह्मणाः ॥ वृ० पा० ।

वेदशास्त्रार्थविच्छान्तःशुचिधर्ममनाःसदा॥
गायत्रीब्रह्मचिन्ताकृत्पितृश्राद्धेषु पावनः ॥३४
रथंतरबृहज्ज्येष्ठसामावित् त्रिसुपर्णकः ॥
त्रिमधुश्चात्ति योविप्रः पितृश्राद्धे सपूजितः ३५
मातामहश्च दौहित्रोभागिनेयोमातुलस्तथा॥
मातृष्वस्रेयतज्जौ च तथा मातुलपुत्रकः ॥३६
जामाता श्वशुरोबन्धुर्भार्या भ्राता च तत्सुतः॥
सुव्रताश्च सदाचाराएते श्राद्धेषु पावनाः ॥३७
ऋत्विग्गुरुरुपाध्यायआचार्यः श्रोत्रियोपरः ॥
एते श्राद्धेषु संपूज्या ज्ञातिसम्बान्धिबान्धवाः ३८
अग्निहोत्री च योविप्रआवसथ्याग्निकोपि वा॥

पितृमातृपरावेतौ भोक्तव्यौ हव्यकव्ययोः॥३९॥
कृष्येकवृत्तिजीवी योभक्तोमात्रादिकेषु च ॥
षट्कर्मनिरतः पूज्योहव्यकव्येषु सर्वदा ॥४०॥
क्षत्रवृत्तिसमाचारोमात्रादिभक्तितत्परः ॥
शुचिः षट्कर्मयुक्तश्च हव्यकव्ये सपूजितः ४१
इत्युक्तगुणसम्पन्नान् ब्राह्मणान्पूर्ववासरे ॥
निमन्त्रयेत तान्भक्त्या नियोगाख्यान पूर्वकम्४२

श्राद्धकर्तृभोक्तृनियमाः ॥ वृ०पा० ।

सव्येन देवतार्थं च पित्र्यर्थमपसव्यवान् ॥
चरितव्यं ततस्तैः स्यादुक्तं पितृव्रतं द्विजैः ॥४३॥
जितेन्द्रियैस्तु भाव्यं स्यादहोरात्रमतन्द्रितैः॥
तस्मिन्नहनि प्रातर्वा यत्र श्राद्धमुपस्थितम् ॥४४॥
निमन्त्रयेत तान्भक्त्या तैश्चभाव्यं जितेन्द्रियः॥
विप्रोरः पार्श्वपृष्ठस्थाः पितृमातामहादयः ॥४५॥
भुंजते क्रमशः श्राद्धे तथा पिण्डाशिनोपिच॥
निमन्त्रितोद्विजःश्राद्धे न शयीत स्त्रिया सह॥

अध्वानं तु न वै यायान्न ब्रूयादनृतं वचः ॥४६॥
नाधीयीत दिवास्वापं न कुर्वीत च संवदेत् ॥
न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकैः॥४७॥

धर्मसिन्धौ। तांबूलक्षुरकर्माभ्यंगदन्तधावनवर्जनं कर्तृधर्माः। कर्तुर्भोक्तुश्च मुख्यवारुणस्नानेनैवाधिकारोन तु गौणस्नाने॥ अवस्त्रत्वं मलवद्वस्त्रत्वं कौपीनवत्त्वं कच्छहीनत्वमनुत्तरीयत्वं काषायवस्त्रत्वमार्द्रवस्त्रत्वं द्विगुणवस्त्रत्वं रक्तवस्त्रत्वं दग्धवस्त्रत्वं स्यूतवस्त्रत्वमित्येकादशविधनग्नत्वं कर्तृभोक्तृभ्यांवर्ज्यम् ॥

लिखितस्मृतौ ।

श्राद्धं कृत्वा परश्राद्धे यस्तु भुंजीत विह्वलः।
पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः॥४८॥
श्राद्धं दत्वा च भुक्त्वा च अध्वानं योधिगच्छति।
भवन्ति पितरस्तस्य तन्मासं पांसुभोजनाः॥४९॥
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ॥

दानं प्रतिग्रहोहोमं श्राद्धं कृत्वाष्टवर्जयेत् ॥५०॥
अध्वगामी भवेदश्वः पुनर्भोक्ता च वायसः॥
कर्मकृज्जायते दासः स्त्रीगमनेन च सूकरः॥५१॥

श्राद्धाकरणे दोषमाह ॥ अत्रिः।

न निर्वपति यः श्राद्धं प्रमीतपितृकोद्विजः॥
इन्दुक्षये मासि मासि प्रायश्चित्ती भवेत्तु सः॥५२॥
सूर्ये कन्यागते कुर्याच्छ्राद्धं योन गृहाश्रमी॥
धनं पुत्रान्कुलं तस्य पितृनिःश्वासपीडया ५३
कन्यागते सवितरि पितरोयान्ति सत्सुतान्॥
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् ॥५४॥
ततोवृश्चिकसंप्राप्ते निराशाः पितरोगताः ॥
पुनः स्वभवनं यान्ति शापं दत्वा सुदारुणम् ५५
पुत्रं वा भ्रातरं वापि दौहित्रं पौत्रकं तथा ॥
पितृकार्यें प्रसक्ताये ते यान्ति परमां गतिम्॥५६॥

श्राद्धे आसनादिदिङ्निर्णयः ॥ वृ० पा०।

आसने त्वासनं दद्याद्वामे वा दक्षिणेपि वा ॥
पितृकार्येषु वामं तद्दैवे कर्माणि दक्षिणम् ॥५७॥

पितृकार्येषु योदद्याद्दक्षिणे दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य सार्धानि वत्सराणि षट् ५८
तस्माद्वामतएवात्र पितृकर्माणि चासनम् ॥
दैविके दक्षिणं तद्वदिति वासिष्ठजोऽब्रवीत् ॥५९ ॥
मनुः। व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्॥
कुतपं चासने दद्यात्तिलैश्च विकरेन्महीम् ॥६०॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ६१

कुतपकालनिर्णयः ॥ वसिष्ठस्मृतौ ।

दिवसस्याष्टमे भागे मन्दी भवति भास्करः॥
सकालः कुतपोनाम पितॄणां दत्तमक्षयम् ॥६२॥
वृ.पा.।पंचदशमुहूर्ताहस्तत्प्रागर्धं दिनं स्मृतम् ॥
अपरार्द्धं स्मृतं रात्रिस्तन्मध्यं कुतपोमतः॥६३॥
यथा यथा च ह्रस्वत्वं पुंसश्छायैनसोभवेत् ॥
तथा तथा पवित्रः स्यात्कालः श्राद्धार्चनादिषु६४
छायायां पुरुषस्यैनस्तत्पादार्धोभवेद्यदा ॥

आधानश्राद्धदानादेः सकालः क्षयकृत्स्मृतः ६५
अयुतं तु मुहूर्तानां वर्णाष्टशतसंयुतम् ॥
त्रिंशाद्भिस्तैरहोरात्रमिति माध्यन्दिनी श्रुतिः ६६
मध्याह्ने तु गते सूर्ये न पूर्वे न च पश्चिमे ॥
तुलाग्रसंस्थिते चैव सोष्टमोभागउच्यते ॥ ६७॥
मध्याह्नाच्चलितोभानुः किंचिन्मन्दगतिर्भवेत् ॥
सकालोरौहिणोनाम पितॄणां दत्तमक्षयम् ॥६८॥
तस्मात्सर्वप्रयत्नेन रौहिणं तु न लंघयेत् ॥
अकाले विधिना दत्तं न देवपितृगामि तत्॥६९॥

धर्मसिन्धौ॥दिनस्य पञ्च विभागास्त्रित्रिमुहूर्तकास्तत्राद्योभागः प्रातःसंज्ञःद्वितीयः संगवः तृतीयोमध्याह्नः चतुर्थोपराह्नःपंचमोभागः सायाह्नः दिनस्य पञ्चदशोभागोमुहूर्तःतत्र सप्तमोगन्धर्वोष्टमोमुहूर्तः कुतपः नवमोरौहिणः ॥ ७० ॥

निर्णयासिन्धौ ॥ मात्स्ये ।

मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ॥
रौप्यं दर्भास्तिलागावोदौहित्रश्चाष्टमःस्मृतः॥७१॥

पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः॥
अष्टावेते यतस्तस्मात् कुतपाइति विश्रुताः ॥७२॥
ब्राह्मे। यतिस्त्रिदण्डः करुणा राजतं पात्रमेव च ॥
दौहित्रं कुतपः कालश्छागः कृष्णाजिनं तथा ७३
स्मृत्यन्तरे। अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च ॥
घृतं च कपिलायागोर्दौहित्रमिति कीर्तितः॥७४॥
ब्रह्माण्डे।अमावस्यागतंसोमयातुखादतिगौ स्तृणम्
तस्यागोर्यद्भवेत्क्षीरं तद्दौहित्रमुदाहृतम् ॥ ७५॥
आपस्तं.अटव्यां ये समुत्पन्नाअकृष्टफालितास्तथा॥
ते वै श्राद्धे पवित्राः स्युस्तिलास्ते न तिलाःस्मृताः

श्राद्धे वर्ज्यपदार्थाः ॥ वृ॰पा॰ ।

निष्पावराजमाषाणुकुलित्थान् कोरदूषकान्॥
मसूरान्भीतपाकं च पुलकं शणमर्कटाः॥७७॥
आढक्यसितसिद्धार्थवल्लनिस्विन्नधान्यकम्॥
पिण्याकं परिदग्धं च मथितं च विवर्जयेत् ॥७८॥
नापि नीरसनिर्गन्धं करंजं सर्वमुक्तकम् ॥

अप्रोक्षितं च यत्किंचित्पर्युषितं विवर्जयेत् ॥७९॥
लोहितान् वृक्षनिर्यासान्प्रत्यक्षलवणानि च॥
कृतकृष्णानि लवणं सर्वाः पलांडुजातयः॥८०॥
कृष्णजीरकवंशाग्रं भूतृणानि विवर्जयेत् ॥
कुंभीकेमुकपालंक्यकट्फलं तण्डुलीयकाः ॥८१॥
नालिक्यं च समच्छत्रासौभांजनकुसुंभिकाः॥
कोविदारकरंजौ च सुषुष्वामूलकं तथा ॥८२॥
कूष्माण्डं गौरवार्ताकं बृहत्याश्च फलानि च॥
करीरफलपुष्पाणि विडंगमरिचानि च ॥८३॥
जंवारिकासजंबीरासमृज्जाबीजपूरकाः ॥
जम्बलावूनिपिप्पल्यः पटोलं पिण्डमूलकम्॥८४॥
मसूरांजनपुष्पं च ददच्छ्राद्धे पतत्यधः ॥

श्राद्धे देयानि पदार्थान्याह ॥ वृ०पा० ।

व्रीहयोयवगोधूमा मुद्रामाषास्तिलाअपि ॥
नीवारश्यामकाद्यं च अकृष्टसंभवानि च ॥८५॥
आरण्यकालशाकादि प्रतिषिद्धापराणि च॥

माहेयीक्षीरमध्वादिखड्गादिपिशितानि च ॥८६॥
शर्करागुडखण्डादिसंशुद्धं क्षौद्रमेव च ॥
पितृश्राद्धे हविर्मुख्यं यद्वा तद्वाप्यलाभतः ॥८७॥
शंखः। आम्रमामलकीमिक्षुं मृद्वीकांदाधिदाडिमान्
विदारीं चैव रम्भाद्याद्दद्याच्छ्राद्धे प्रयत्नतः॥८८॥
धानालाजान्मधुयुतां सक्तूञ्छर्करया[1] तथा ॥
दद्याच्छ्राद्धे प्रयत्नेन शृंगाटकविसे[2]तेकान् ॥८९॥

श्राद्धदेशमाह ॥ मनुः ।

शुचिदेशं विविक्तं च गोमयेनोपलेपयेत् ॥
दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् ॥९०॥
अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ॥
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥९१॥

धर्मसिन्धौ। कुरुक्षेत्रप्रभासपुष्करप्रयागकाशी-गङ्गायमुनानर्मदादितीरनैमिषगङ्गाद्वारगयाशीर्षा-क्षय्यवटादिषु श्राद्धं महाफलम् ॥ ९२ ॥

१ दाख । २ भिस ॥

वृ.पा.।दक्षिणाप्रवणे देशे श्राद्धं कुर्वीत पैतृकम् ॥
पितॄणांवाचनोद्देशः सप्रोक्तोक्षयतृप्तिकृत ॥६३॥
धर्मसिं.।शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे॥
उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ॥ ६४ ॥
पिता माता च भार्या च भगिनी दुहिता तथा ॥
पितृमातृष्वसा चैव सप्त गोत्राणि वै विदुः ॥६५॥

एषां गोत्राणि पुरुषाः क्रमेण चतुर्विंशतिविंशतिषोडशद्वादशैकादशदशाष्टवित्येकोत्तरशतसंख्यास्तेषामुद्धारइत्यर्थः ॥ तत्र पितृकुले द्वादश पूर्वा द्वादशपरा इति चतुर्विंशतिरेवमग्रेऽपि॥६६॥

शंखः।यद्ददाति गयास्थश्च प्रभासे पुष्करे तथा ॥
प्रयागे नैमिषारण्ये सर्वमानंत्यमश्नुते ॥ ६७ ॥
गङ्गायमुनयोस्तीरे अयोध्यामरकंटके ॥
नर्मदायां गयातीर्थे सर्वमानन्त्यमश्नुते ॥६८॥
वाराणस्यां कुरुक्षेत्रे भृगुतुंगे हिमालये ॥
सप्तत्रेण्यृषिकूपे च तदप्यक्षयमुच्यते ॥६९॥

हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने ॥
विषुवत्ययने चैव सर्वमानंत्यमश्नुते ॥१००॥
म्लेच्छदेशे तथा रात्रौ सन्ध्यायां च विशेषतः ॥
नश्राद्धमाचरेत्प्राज्ञोम्लेच्छदेशे न च व्रजेत्॥१०१॥

लिखितस्मृतौ ।

गयाशिरे तु यत्किंचिन्नाम्ना पिण्डं तु निर्वपेत्
नरकस्थोदिवं याति स्वर्गस्थोमोक्षमाप्नुयात् १०२

धर्मसिन्धौ । परकीयगृहादौ श्राद्धकरणे तद्भूमिस्वामिपितरोभागं हरति तेन गृहस्वामिने मूल्यं दत्वा कार्यं स्वाम्यनुज्ञया वा कार्यम् ॥

श्राद्धभेदाः ॥ लिखितस्मृतौ ।

नवश्राद्धं त्रिपक्षे च द्वादशस्वेव मासिकम् ॥
षण्मासौ चाब्दिकं चैव श्राद्धान्येतानि षोडश १०३
यमस्मृ.॥नित्यं नैमित्तिकंकाम्यं वृद्धिश्राद्धमथापरम्
पार्वणं चेति विज्ञेयं श्राद्धं पञ्चविधं बुधैः॥१०४॥

१ संक्रान्ति ।

श्राद्धे विश्वेदेवाः ॥ लिखितस्मृतौ ।

क्रतुर्दक्षोवसुः सत्यः कालकामौ धूरिलोचनौ ॥
पुरूरवाआर्द्रवाश्च विश्वेदेवाः प्रकीर्त्तिताः ॥१०५॥
आगच्छन्तु महाभागा विश्वेदेवामहाबलाः ॥
ये अत्र विहिताः श्राद्धे सावधानाभवन्तुते॥१०६॥
इष्टिश्राद्धे क्रतुर्दक्षो वसुः सत्यश्च दैविके ॥
कालःकामोऽग्निकार्येषु अ[१]रे[२] धूरिलोचनौ १०७
पुरूरवाआर्द्रवाश्च पार्व्वणेषु नियोजयेत् ॥१०८॥

अथभोजनम् ॥ मनुः ।

पाणिभ्यां तूपसंगृह्य स्त्रयमन्नस्य वर्द्धितम् ॥
विप्रान्तिके पितॄन्ध्यायञ्छनकैरुपनिक्षिपेत १०९॥
उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते ॥
तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः ॥११०॥
गुणांश्च सूपशाकाद्यान्पयोदधिघृतं मधु॥
विन्यसेत्प्रयतः पूर्वं भूमावेव समाहितः ॥१११॥
उपनीय तु तत्सर्वं शनकैः सुसमाहितः ॥

१ यजन । २ यज्ञ ।

परिवेषयेत प्रयतोगुणान्सर्वान्प्रचोदयन् ॥११२॥
वृ.पारा.तद्विष्णोरिति मन्त्रेणगायत्र्याचप्रयत्नवान्
प्रोक्षयेदशनं सर्वं शूद्रदृष्टयादिशुद्धये ॥ ११३ ॥
गृहाग्निशिशुदेवानां यतीनां ब्रह्मचारिणाम् ॥
तावन्न दीयते किंचिद्यावत्पिण्डान्न निर्वपेत् ११४
कांजिकं दधि तक्रं च शृतं चाशृतमेव वा ॥
पूर्वाह्णे न प्रदातव्यमेकोद्दिष्टेथ पार्वणे ॥११५॥
आपिण्डदानतोदद्याद्यात्किंचिच्छ्राद्धवासरे॥
तेनैव पितरोयान्ति श्राद्धं गृह्णन्ति नैव च ११६
परिवेषयेत् समं सर्वं पंक्तिभेदं न कारयेत् ॥

व्यासवृहत्पाराशरौ ।

पंक्तिभेदी वृथा पाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः॥११७॥

यद्येकपंक्त्यां विषमं ददाति,स्नेहाद्भयाद्वा यदि चार्थलोभात् ॥ वेदेषु दृष्टं मुनिभिश्च गीतं,तद्ब्रह्महत्यासदृशं वदन्ति ॥ ११८ ॥

वृ.पा.।देवान्पितॄन्मनुष्यांश्च वह्निमभ्यागतांस्तथा॥
अनभ्यर्च्य च भुंजानोवृथापाकइति स्मृतः॥११९॥

श्राद्धे सगोत्रनिमन्त्रणनिषेधः॥ वृ०पा०।

ब्राह्मणं न सगोत्रं च पूजयेत्पितृकर्मणि॥
नोपतिष्ठति तत्तेषां किन्तु स्याच्च निराशता१२०
सगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः॥
हताः स्युः पितरस्तेन न भुक्तं फलदं भवेत्॥१२१॥
श्राद्धं कुर्वन्द्विजोऽज्ञानात्सगोत्रं यस्तुभोजयेत्॥
सलुप्तपितृदेवः सन्नरकं प्रतिपद्यते॥१२२॥
तस्मान्न गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम्॥
सज्ञातिमध्येभोज्यःस्यादुच्छ्रितैस्तु द्विजोत्तमैः१२३

श्राद्धे ग्राह्याग्राह्यपत्रपुष्पधूपाः॥ वृ० परा०।

न जातीकुसुमैर्विद्वान् विल्वपत्रैश्च नार्चयेत्॥
सुरभीनागकर्णाद्यैर्हयारिकांचनारकैः॥ १२४॥
विल्वैर्यश्चार्चयेद्विद्वान् पितृश्राद्धेतिगर्हितः॥
तद्भुंजते सुराःश्राद्धं निराशैः पितृभिर्गतैः१२५

सर्वाणि रक्तपुष्पाणि निषिद्धान्यपराणि च ॥
वर्जयेत्पितृकार्येषु केतकीकुसुमानि च ॥ १२६॥
शंखः।तोयोद्भवानि देयानि रक्तान्यपि विशेषतः॥
बृ.पा.।गोरम्भाभृंगराजाद्यैर्मल्लिकाकुब्जकैरपि ॥
समर्चयेद्द्विजाञ्छ्राद्धे हव्यकव्यादितोद्विजः १२७
न दद्याद्गुग्गुलं श्राद्धे द्विजानां पितृदैवते ॥
धूपाभावे गुडोदेयो घृतधूपोद्विजोत्तमैः ॥१२८॥
कुंकुमं चन्दनं वर्ज्यं देयं गन्धविमिश्रितम्॥
ऊर्ध्वं च तिलकं कार्यं नैव कुर्यात्त्रिपुण्ड्रकम्॥१२९
ऊर्ध्वं च तिलकं कार्यं दैवे पित्र्ये च कर्मणि ॥
निराशाः पितरोयान्ति दृष्ट्वा विप्रं त्रिपुण्ड्रकम्॥
पवित्रं यदि वा दर्भं करे कृत्वा द्विजान्नरः ॥
समालभेत दुर्बुद्धिस्तच्छ्राद्धमासुरं भवेत् ॥१३१॥

श्राद्धे तिथिविचारः ।

दैवे कर्मणि संप्राप्ते तिथौ यत्रोदितोरविः ॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके॥१३२

वृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदयं द्विजाः॥
क्षीयमाणदिने कुर्याच्छ्राद्धं विद्वान्क्षयादिकम् १३३

श्राद्धे पात्राणि ॥ वृ०पा० ।

अर्घार्थं भोजनार्थं च पात्राणि तैजसानि च ॥
मृत्पाषाणमयान्येके विदुरन्ये पराणि च ॥१३४॥
पलाशपद्मपत्राणि न निषिद्धानि यानि तु ॥
श्राद्धेषु तानि कार्याणि पात्राणि भोजनार्घयोः १३५
वृद्धिश्राद्धेषु मन्यन्ते मृन्मयानि तु केचन ॥
शौनकस्य मतं चैतद्यथा कार्यं तु मृन्मयम् १३६
एकद्रव्याणि कार्याणि भोजनाद्यर्घयोरपि ॥
त्रीणि पैतृकपात्राणि द्वे द्वे वै वैश्वदेविके॥१३७॥
एकस्य वैश्वदेवानि पैतृकाण्यन्यवस्तुतः ॥
इति तानि कार्याणि भेदमेकत्र वर्जयेत्॥१३८॥
वटाश्वत्थार्कपत्रेषु कुम्भीतिन्दुकयोरपि ॥
कोविदारकरंजेषु न भुंजीत कदाचन ॥१३९॥

शूद्रश्राद्धे ब्राह्मणभोजने दोषाः ॥ वृ० पा० ।

शूद्रान्नं योद्विजोभुंक्ते मतिपूर्वं द्विजाधमः ॥

कृमित्वं याति विष्ठायां सयुगान्येकविंशतिम् १४०
शूद्रोच्छिष्टं तु योभुंक्ते पञ्चाहानिद्विजोत्तमः॥
तद्विष्ठायां कृमित्वं सप्राप्नोति च शतं समाः १४१
अतोन भोजयेद्विप्रं निर्वापेनैव पूजयेत् ॥
आदानं भोजनाद्युक्तमिति पाराशरोब्रवीत् १४२
न भोजयेत्स्त्रियं श्राद्धे यद्यपि ब्रह्मचारिणी ॥
द्विजन्मानोपि कुर्वीरञ्छ्राद्धमामाशनेन तु॥१४३॥

शूद्रकर्तव्यश्राद्धप्रकारः ॥ वृ० पा० ।

आमान्नेन तु शूद्रस्य तूष्णीं च द्विजपूजनम् ॥
श्राद्धं कृत्वा तु निर्वाप्य सजातीनाशयेदथ १४४
यः शूद्रोभोजयेद्विप्राञ्छृतपाकाशनेन तु ॥
सतद्विप्रकृतैनोभिर्लिप्यते शक्तिजोब्रवीत् १४५
शूद्रःपाकं द्विजेभ्यश्च विभवान्धोददाति यः॥
कृमिर्भवति विष्ठायां सयुगान्येकविंशतिम् १४६
भोजितेन तु विप्रेण यत्पापं तस्य जायते ॥
तेनासौ लिप्यते मूढोयः शूद्रोभोजयेद् द्विजान् ॥

यः शूद्रोभोजयेद्विप्राञ्छूत्तपाकेन दुर्मतिः ॥
सगच्छेन्नरकं घोरं पुनरावृत्तिवर्जितम् ॥१४८॥
यत्किञ्चित् किल्विषं विप्रैः कृतपूर्वं तु तिष्ठति ॥
तेनासौ लिप्यते पापी यःशूद्रोभोजयेद्द्विजान् ॥

श्राद्धे मांसनिषेधः ॥ वृ० पा० ।

यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत्पितॄन् ॥
सोविद्वांश्चन्दनं दग्ध्वा कुर्यादंगारविक्रयम् ॥१५०॥
क्षिप्त्वा कूपे यथा किञ्चिद्बालआदातुमिच्छाति ॥
पतत्यज्ञानतः सोपि तथा मांसेन श्राद्धकृत् १५१
व्यासस्मृ० विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी
तावत्पुष्करपात्रेषु पिवन्ति पितरोऽमृतम् ॥१५२॥
यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे ॥
तत्फलं ऋषयः श्रेष्ठा विप्राणां पादशोधने ॥१५३॥
मनुः।अत्युष्णं सर्वमन्नं स्याद्भुंजीरंस्ते च वाग्यताः
न च द्विजातयोब्रूयुर्दात्रा पृष्टा हविर्गुणान् ॥१५४॥
यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः ॥
पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥१५५॥

यद्वेष्टितशिराभुंक्ते यद्भुंक्ते दक्षिणामुखः॥
सोपानत्कश्च यद्भुंक्ते तद्वै रक्षांसि भुंजते॥१५६॥
चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च॥
रजस्वला च षण्डश्चनेक्षेरन्नश्नतोद्विजान्॥१५७॥
होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते॥
दैवे कर्माणि पित्र्ये वा तद्गच्छत्ययथातथम् १५८
अपराह्णस्तथा दर्भावास्तुसम्पादनं तिलाः॥
सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु सम्पदः १५९
दर्भाः पवित्रं पूर्वाह्णोहविष्याणि च सर्वशः॥
पवित्रं यच्च पूर्वोक्तं विज्ञेयाहव्यसम्पदः॥१६०॥

श्राद्धफलमाह॥ शंखः।

प्रजां पुष्टिं यशःस्वर्गमारोग्यं च धनं तथा॥
नृणां श्राद्धैःसदा प्रीताःप्रयच्छन्ति पितामहाः १६१
याज्ञव०।कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि॥
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफं तथा॥१६२॥
ब्रह्मवर्चस्विनःपुत्रान् स्वर्णरूप्ये सकुप्यके॥

जातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा १६२

अथ दानविचारः ॥१४॥ योगियाज्ञवल्क्यः ।

न्यायार्जितधनं चैव ह्यर्थिभ्योयत्प्रदीयते ॥
अर्थिभ्यः श्रद्धया मुक्तं दानमेतदुदाहृतम् ॥१॥
अत्रिः।अहन्यहनि दातव्यमदीनेनान्तरात्मना॥
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ॥२॥
पाराशरः।दानेन प्राप्यते स्वर्गः सुखं दानेन लभ्यते।
इहामुत्र च दानेन पूज्योभवति मानवः ॥ ३ ॥
न दानात्परमोधर्मस्त्रिषु लोकेषु विद्यते ॥
तस्माद्दानं प्रदातव्यं यथा शक्त्या सदा नरैः॥ ४ ॥
धर्मगि.।एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं भृशम् ॥५॥

तस्माद्विभवानुसारेण धनधान्यादिदेयमसंभवे पूगीफलादिकमपि प्रत्यहं देयम् ॥

गीतायां।दातव्यमिति यद्दानं दीयतेऽनुपकारिणे॥
देशे कालेच पात्रेच तद्दानं सात्विकं स्मृतम् ॥६॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥७॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामससमुदाहृतम् ॥८॥
वृ.पा.।तपःपरं कृतयुगे त्रेतायां ज्ञानमुत्तमम्॥
द्वापरे यज्ञमेवाहुर्दानमेव कलौयुगे ॥९॥
अभिगम्य कृते दानं त्रेतायां साभिमन्त्रणम् ॥
द्वापरे याच्यमानं तु कलौ दीयेत सेवया ॥१०॥
अभिगम्योत्तमं दानं मध्यमं साभिमन्त्रणम् ॥
अधमं याच्यमानं स्यात्सेवादानं तु निष्फलम्११
व्यासः।यद्ददाति विशिष्टेभ्योयच्चाश्नाति दिने दिने
तच्च वित्तमहं मन्ये शेषं कस्याभिरक्षत्ति ॥१२॥
यद्दाति यदश्नाति तदेव धनिनोधनम् ॥
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥१३॥
किं धनेन करिष्यन्ति देहिनोऽपि गतायुषः॥
यद्वर्द्धयितुमिच्छन्तस्तच्छरीरमशाश्वतम् ॥१४॥

अशाश्वतानि गात्राणि विभवोनैव शाश्वतः॥
नित्यं सन्निहितोमृत्युः कर्तव्योधर्मसंग्रहः॥१५॥
यदि नाम न धर्माय न कामाय न कीर्तये॥
यत्परित्यज्य गन्तव्यं तद्धनं किं न दीयते॥१६॥
जीवन्ति जीविते यस्य विप्रमित्राणि बान्धवाः॥
जीवितं सफलं तस्य आत्मार्थे कोन जीवति॥१७॥
पशवोऽपि हि जीवन्ति केवलात्मोदरंभराः॥
किं कायेन सुगुप्तेन बलिना चिरजीविना॥१८॥
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते॥
इच्छानुरूपोविभवः कदा कस्य भविष्यति॥१९॥
अनाहूतेषु यद्दत्तं यच्च दत्तमयाचितम्॥
भविष्यति युगस्यान्तस्तस्यान्तोनभविष्यति॥२०
मातापितृषु यद्द्याद्भ्रातृषु श्वशुरेषु च॥
जायापत्येषु यद्द्यात् सोऽनन्तः स्वर्गसंक्रमः॥२१॥
पितुः शतगुणं दानं सहस्रं मातुरुच्यते॥
भगिन्यां शतसाहस्रं सोदरे दत्तमक्षयम्॥२२॥

अहन्यहनि दातव्यं ब्राह्मणेषु मुनीश्वराः॥
आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति॥ २३॥
ब्राह्मणेषु च यद्दत्तं यच्च वैश्वानरेहुतम् ॥
तद्धनं धनमाख्यातं धनं शेषं निरर्थकम् ॥२४॥

सुपात्रे दानसफलम् । तत्रैव ।

सुक्षेत्रे वापयेद्बीजं सुपात्रे दापयेद्धनम् ॥
सुक्षेत्रे च सुपात्रे च क्षिप्तं नैव हि दुष्यति ॥२५॥
विद्याविनयसम्पन्ने ब्राह्मणे गृहमागते ॥
क्रीडन्त्योषधयः सर्वायास्यामः परमां गतिम्॥२६॥
अत्रिः । ब्राह्मणे वेदविदुषि सर्वशास्त्रविशारदे ॥
मातृपितृपरे चैव ऋतुकालाभिगामिनि ॥२७॥
शीलचारित्रसंपूर्णे प्रातःस्नानपरायणे ॥
तस्यैव दीयते दानं यदीच्छेच्छ्रेयआत्मनः ॥२८॥
दक्षस्मृ.। सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ॥
सहस्रगुणमाचार्ये त्वनन्तं वेदपारगे ॥२९॥
वृहस्प.।श्रोत्रियाय कुलीनाय दरिद्राय च वासव॥
सन्तुष्टाय विनीताय सर्वभूताहिताय च॥३०॥

वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः॥
ईदृशाय सुरश्रेष्ठ यद्दत्तं हि तदक्षयम् ॥३१॥
बृ.पारा.।लक्ष्मीभ्रष्टाय यद्दत्तं दरिद्रायार्थिने द्विजाः॥
तदक्षय्यं समुद्दिष्टमिति पाराशरोवदत् ॥३२॥
देशे काले च पात्रे च धनं न्यायागतं यदि॥
दीयते ब्राह्मणश्रेष्ठ तदानन्त्याय कल्पते॥३३॥

पात्रलक्षणमाह ॥ योगियाज्ञवल्क्यः ।

यत्र विद्या तपः शीलं स्ववर्णाचारएव च ॥
श्रुतं बृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम्॥३४॥
न विद्यया केवलया तपसा वापि पात्रता ॥
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥३५॥
बृ.पारा.।न वेदैः कवलैर्वापि तपसा केवलेन वा ॥
सद्वृत्तैरेव सा प्रोक्ता पात्रता ब्राह्मणस्य च॥३६॥
वसिष्ठस्मृ.।स्वाध्यायाढ्यं योनिमित्रं प्रशान्तं,
चैतन्यस्थं पापभीरुं बहुज्ञम् ॥ स्त्रीयुक्ताधार्मिकं
गोशरण्यं,वृत्तैः क्षान्तं तादृशंपात्रमाहुः ॥३७॥

किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ॥
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे॥ ३८
महाभा.। अक्रोधनाधर्मपराः सत्यनित्यादमेरताः॥
तादृशाः साधवोविप्रास्तेभ्योदत्तं महाफलम्॥ ३९।
अमानिनःसर्वसहादृढार्थाविजितेन्द्रियाः॥
सर्वभूतहितामैत्रास्तेभ्योदत्तं महाफलम् ॥ ४० ॥
अलुब्धाःशुचयोवैद्याह्रीमन्तः सत्यवादिनः ॥
स्वकर्मनिरताये च तेभ्योदत्तं महाफलम् ॥ ४१ ॥
सांगाश्च चतुरोवेदानधीते योद्विजर्षभः ॥
षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयोविदुः॥ ४२ ॥
ये त्वेवं गुणजातीयास्तेभ्योदत्तं महाफलम्॥
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ॥ ४३ ॥
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः॥
तारयेत कुलं सर्वमेकोपीह द्विजर्षभः ॥ ४४ ॥
मनुरपि।विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु ॥
निस्तारयति दुर्गाच्च महतश्चैव किल्विषात्॥ ४५॥

मूर्खे दाननिषेधः ॥ मनुः ।

नश्यन्ति हव्यकव्यानि नराणामविजानताम् ॥
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥४६॥
बृहस्प-।आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु॥
विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति ॥४७॥
एवं गां च हिरण्यं च वस्त्रमन्नं महीं तिलान् ॥
अविद्वान्प्रतिगृह्णाति भस्मीभवति काष्ठवत्॥४८॥
व्यासः।यस्य चैव गृहे मूर्खोदूरे चापि गुणान्वितः॥
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥४९॥
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ॥
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥५०॥
ब्राह्मणातिक्रमोनास्ति विप्रे वेदविवर्जिते॥
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥५१॥
सन्निकृष्टमधीयानं ब्राह्मणं योऽव्यतिक्रमेत् ॥
भोजने चैव दाने च हन्यात् त्रिपुरुषं कुलम्॥५२॥
यथा काष्ठमयोहस्ती यथा चर्ममयोमृगः ॥

यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः॥५३॥
ग्रामस्थानं यथा शून्यं यथा कूपश्च निर्जलः॥
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः॥५४॥
नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवार्जिते ॥
दीयमानं रुदत्यन्नं भयाद्वै दुष्कृतं कृतम् ॥ ५५॥
वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत् ॥
न च मूर्खं निराहारं षड्रात्रमुपवासिनम्॥ ५६॥
बृ.पा.।न गतिर्मूर्खदानेन नतारोम्भसि वाश्मनाम्॥
तस्मात्तस्य न दातव्यं सह दात्रा समज्जति॥५७॥
यथा भस्म तथा मूर्खोविद्वान्प्रज्वलिताग्निवत् ॥
होतव्यं च समृद्धेग्नौ जुहुयात्कोनुभस्मनि॥५८॥
यथा शूद्रस्तथा मूर्खःशूद्रस्यैव च भस्मवत्॥
शूद्रेण संहसंवेशं दानं मूर्खे च वर्जयेत् ॥ ५६॥
गृहीतायोभवेद्विद्वान्सनावारोहकोयथा ॥
आत्मानं तारयेत्तं च नदीं वैतरिणीं द्विजः॥६०॥
योमूर्खोपि सदाचारः षट्कर्मनिरतः सदा॥

सनयेत्स्वर्गमात्मानं वृद्धांश्चैव न पीडयेत् ॥६१॥
न विद्या नतपोयस्य आदत्ते च प्रतिग्रहम्॥
आददानस्त्वनाचारोदातारमपि मज्जयेत्॥६२॥
तिलान्स्वर्णं च गां भूमिमविद्वानाददाति यः॥
भस्मी भवति सोह्याय दातुःस्यादफलं च तत्६३
तस्मादविद्वान्नाद्द्यादल्पशोपि प्रतिग्रहम् ॥
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥६४॥
सर्वं गवादिकं दानं पात्रे दातव्यमर्चितम्॥
विद्वद्भिर्न त्वपात्रेषु गतिमिच्छद्भिरात्मनः ॥६५॥
न दानं यशसे दद्यान्न भयान्नोपकारिणे ॥
न नृत्यगीतशीलेभ्योहासकेभ्यश्च धार्मिकः ॥६६॥
पात्रभूतोपि योविप्रः प्रतिगृह्य प्रतिग्रहम् ॥
असत्सु विनियुंजीत तस्मै देयं न तद्भवेत् ॥६७॥
संचयं कुरुते यस्तु समादाय ततस्ततः ॥
धर्मार्थं नोपभुंजीत न तं तस्करमर्पयेत् ॥६८॥

वृथा जन्मानि दानानि च ॥ तत्रैव ।

वृथा जन्मानि चत्वारि वृथा दानानि षोडश॥

तानि पृथक् प्रवक्ष्यामि निबोधध्वं द्विजोत्तमाः ॥
अपुत्रस्य वृथा जन्म ये च धर्मवहिष्कृताः ॥
दरिद्रस्य वृथा जन्म व्याधितस्यापि निष्फलम् ७०
पण्यस्थानेषु यद्दत्तं वृथा दानं तदुच्यते ॥
आरूढपतिते चैव अन्यायोपार्जितं च यत् ॥७१॥
व्यर्थमब्राह्मणे दानं पतिते तस्करेपि च ॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके ॥७२॥
ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ ॥
वेदविक्रयिणे चैव यस्य चोपपतिर्गृहे ॥७३॥
स्त्रीजिते चैव यद्दत्तं व्यालग्राहेपि निष्फलम् ॥
परचारकेपि यद्दत्तं वृथा दानानि षोडश ॥७४॥
तमोवृत्तं च योदद्याद्भयात्क्रोधाच्च मानवः॥
विप्रादानं हि तत्सर्वं भुंक्ते गर्भस्थएव हि ॥७५॥
ईर्ष्यया मन्युना दानं यद्दानमर्थकारणात् ॥
योददाति द्विजातिभ्योबालभावे तदश्नुते॥७६॥
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते॥

अप्रमेयगुणं तस्यादुपातिष्ठति यौवने ॥७७॥
यत्सद्धिप्राय वृद्धाय भक्त्या च परया वसु॥
दीयते वेदविद्वुषे उपतिष्ठति वार्धके ॥७८॥
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तमाः॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्गमभीप्सता ७९
अत्रिः।ग्रहणोद्वाहसंक्रान्तौ स्त्रीणां च प्रसवे तथा॥
दानं नैमित्तिकं ज्ञेयं रात्रावपि प्रशस्यते ॥८०॥
लघुपारा-मरुतोवसवोरुद्राआदित्याश्चार्थ देवताः॥
सर्वे सोमे प्रलीयन्ते तस्माद्दानं तु संग्रहे ॥८१॥
खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे तथा॥
शर्वर्य्यां दानमस्त्येव नाऽन्यत्र तु विधीयते॥८२॥
पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि ॥
राहोश्च दर्शने दानं प्रशस्तं नान्यदानिशि ॥८३॥
निर्णयसि-।सूर्यग्रहोयदारात्रौदिवा चन्द्रग्रहस्तथा॥
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ८४
धर्मसि-।सर्वं गङ्गासमं तोयं सर्वे व्याससमाद्विजाः

सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्य्ययोः ॥ ८५ ॥
बृ.पा. हस्तिकृष्णाजिनाद्यस्तु गर्हिताये प्रतिग्रहाः॥
सद्विप्रास्तान्न गृह्णीयुर्गृह्णन्तस्तु पतन्ति ते ॥ ८६॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ॥
नवश्राद्धेषु योभोक्ता न भूयः पुरुषोभवेत् ॥ ८७॥
योगृह्णाति कुरुक्षेत्रे ग्रामं गां द्विमुखीं हयम् ॥
नवश्राद्धान्नभुक्पञ्च वर्ज्यानिर्माल्यवद् द्विजाः ८८
एते यान्त्यन्धतामिस्रं यावन्मनुसहस्रकम् ॥
अरुण. प्रतिग्राही कुरुक्षेत्रे न भूयः पुरुषोभवेत् ॥
तथापि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत् ॥ ८९॥
तप्तकृच्छ्रद्वयं कुर्यादैन्दवेन समान्वितम् ॥
सत्रेण वा यजेताथ जपेद्वा लक्षसप्तकम् ॥ ९०॥
महाभा. धर्मादर्थाद्भयात्कामात्कारुण्यादितिभारत
दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ॥ ९१॥
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥
इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता ॥ ९२॥

ददाति वा दास्यति वा मह्यं दत्तमनेन वा॥
इत्यर्थिभ्योनिशम्यैव सर्वं दातव्यमर्थिने ॥६३॥
नास्याहं न मदीयोयं पापं कुर्याद्धिमानितः॥
इति दद्याद्भयादेव दृढं मूढाय पण्डितः ॥६४॥
प्रियोमेऽयं प्रियोऽस्याहमिति संप्रेक्ष्य बुद्धिमान् ॥
वयस्यायैवमाक्लिष्टं दानं दद्यादतन्द्रितः ॥६५॥
दीनश्च याचते चायमल्पेनाऽपि हि तुष्यति॥
इति दद्याद्दरिद्राय कारुण्यादिति सर्वथा ॥६६॥
इति पञ्चविधं दानं पुण्यकीर्त्तिविवर्धनम् ॥
यथा शक्त्या प्रदातव्यमेवमाह प्रजापतिः॥६७॥

अथान्नदानम् ॥ वृ०पा० ।

गोभूहेमादिदानानां सर्वेषामप्यनुत्तमम् ॥
अन्नदानमपेक्षन्ते सर्वे अपि दिवौकसः ॥६८॥
अन्नार्थं मातरिश्वायमन्नार्थं च तथानलः॥
अन्नार्थं सवितादेवोवाति ज्वलति भासते॥६९॥
अन्नकामःससर्जेदं विधिरप्यखिलं जगत् ॥

अन्नात्परतरं तत्त्वं न भूतं न भविष्यति ॥१००॥
दद्याद्योहरहस्तस्मादन्नं विप्राय मानवः ॥
शृतं वा यदि वा चामं सस्वर्गे सुखमेधते ॥१॥
अन्नं प्राणबलं चान्नमन्नं जीवितमुच्यते॥
अन्नं च जगदाधारं सर्वमन्ने प्रतिष्ठितम् ॥२॥
सर्वेषां देवतादीनामन्नं जीवः प्रकीर्तितः ॥
तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति ॥३॥

महाभारते । नारदउवाच ।

अन्नमेव प्रशंसन्ति देवाऋषिगणास्तथा ॥
लोकतन्त्रं हि संज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥४॥
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः॥५॥
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ॥
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥६॥
अन्नाद्गृहस्थालोकेऽस्मिन् भिक्षवस्तापसास्तथा।
अन्नाद्भवन्ति वै प्राणाः प्रत्यक्षं नात्र संशयः॥७॥
कुटुम्बिने सीदते च ब्राह्मणाय महात्मने ॥

दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ ८ ॥
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् ॥
अन्नदानं हि शूद्रे च ब्राह्मणे च विशिष्यते ॥ ९ ॥
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव च ॥
भिक्षितो ब्राह्मणे नेह दद्यादन्नं प्रयाचितः ॥ १० ॥
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठितम् ॥
अन्नदः पशुमान्पुत्री धनवान् भोगवानपि ॥ ११ ॥
प्राणवांश्चापि भवति रूपवांश्च तथा नृप ॥
अन्नदः प्राणदो लोके सर्वदा प्रोच्यते तु सः ॥ १२ ॥

अथ जलदानम् ॥ वृ० पा० ।

मूलमापोहि सर्वस्य सर्वमप्सु प्रतिष्ठितम् ॥
आपोमृतं रसोह्यापआपः शुक्रं बलं महः ॥ १३ ॥
बीजमापोहि सर्वस्य सर्वमाद्भिः समावृतम् ॥
सद्यआप्यायनादापआपोऽश्रेष्ठतरास्ततः ॥ १४ ॥
किंचित्कालं विनाप्यन्नं जीवन्ति मनुजादयः ॥
न जीवन्ति विना ताभिस्तस्मादापोऽमृतं स्मृताः

दत्ताभिरद्भिरेतस्मात्किं न दत्तं कलौयुगे ॥
तथान्नेन प्रदत्तेन सर्वं, दत्तं भवेदिह ॥१६॥
योद्विजान्पाययेत्तोयमन्यानपि पिपासुकान्॥
प्रपाश्च भावयेद्ग्रीष्मे देवलोकमवाप्नुयात्॥१७॥
संनिहत्य तडागानि पुष्करिण्यश्च दीर्घिकाः॥
तथा कूपाश्च वाप्यश्च कर्तव्यागृहमेधिभिः ॥१८॥
बृहस्पतिः।यस्तडागं नवं कुर्यात्पुराणं वापि खानयेत्
ससर्वं कुलमुद्धृत्य स्वर्गलोके महीयते ॥ १९ ॥
वापीकूपतडागानि उद्यानोपवनानि च ॥
पुनः संस्कारकर्ता च लभते मौक्तिकं फलम्॥२०॥
निदाघकाले पानीयं यस्य तिष्ठति वासवः॥
सदुर्गविषमं कृत्स्नं न कदाचिदवाप्नुयात् ॥२१
एकाहं तु स्थितं तोयं पृथिव्यां राजसत्तम ॥
कुलानि तारयेत्तस्य सप्त सप्त परान्यपि ॥२२॥
मनुः।सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ॥
वार्यन्नगोमहीवासास्तिलकांचनसर्पिषाम् ॥२३॥

याज्ञव॰। सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ॥
तद्दत्वा समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २४ ॥
वृ॰पा॰। आदावारभ्य वेदं वा शास्त्रं वान्यतमं द्विजः
अध्यापयेद्द्विजाञ्छिष्यान्विद्यादानंतदुच्यते ॥ २५ ॥
अत्रिः। सर्वेषामेव दानानां विद्यादानं ततोधिकम् ॥
पुत्रादिस्वजने दद्याद्विप्राय च न कैतवे ॥
सकामः स्वर्गमाप्नोति निष्कामोमोक्षमाप्नुयात् २६

अथ गोदानम् ॥ बृहस्पतिः ।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥
तारयन्तीह दातारं जपवापनदोहनैः ॥ २७ ॥
अत्रिः। यावदर्धप्रसूता गौस्तावत् सा पृथिवी स्मृता ॥
पृथिवी तेन दत्ता स्यादीदृशीं गां ददातियः ॥ २८ ॥
तेनाग्नयोहुताः सम्यक् पितरस्तेनतर्पिताः ॥
देवाश्च पूजिताः सर्वे योददाति गवाह्निकम् २९
वृ॰पा॰। एकत्र पृथिवीसर्वा सशैलवनकानना ॥

तस्यागौर्ज्यायसी साक्षादेकत्रोभयतोमुखी॥३०॥
गोर्वत्सस्य तु लोमानि यावत्संख्यानि सन्तिहि॥
तावत्संख्यानि वर्षाणि ब्रह्मलोके महीयते ॥३१॥
अरोगामपरिक्लिष्टां धेनुं वा गामथापि वा॥
दत्वा स्वर्गमवाप्नोति यावदाभूतसंक्षयम् ॥ ३२ ॥
वृहस्प ·।लोहितोयस्तु वर्णेन पुच्छाग्रे यस्तु पांडुरः
श्वेतः खुरविषाणाभ्यां सनीलोवृषउच्यते ॥ ३३ ॥
नीलः पाण्डुरलांगूलस्तृणमुद्धरते तु यः ॥
षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः ॥ ३४॥
लिखितः।लोहितोयस्तु वर्णेन शंखवर्णखुरस्तथा॥
लांगूलशिरसा चैव सवै नीलवृषः स्मृतः ॥ ३५॥
वृ·पा·।पुच्छे शिरसि यःशुक्लः शुक्लपाल्लोहितं वपुः
देवाद्यभीष्टोनीलोयमुत्सृष्टः पावनोवृषः ॥ ३६ ॥
रक्तकृष्णोपि वा शुक्लः सुविषाणः शुभेक्षणः ॥
योनहीनातिरिक्तांगोवृषं तं वा समुत्सृजेत्॥३७॥
याज्ञव·दातास्य स्वर्गमाप्नोति वत्सरान् रोमसंमितान्

कपिला चेत्तारयति भूयश्चासप्तमं कुलम् ॥ ३८ ॥
श्रान्तसंवाहनं रोगिपरिचर्यासुरार्चनम् ॥
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ ३९ ॥

अथ भूमिदानम् ॥ बृ. पा. ।

भूमिदानात्परोधर्मस्त्रैलोक्येपि न विद्यते ॥
पादैकमात्रदानेन यस्याविष्णुपुरे स्थितिः ॥ ४० ॥
तस्य दानात्परोधर्मस्तद्धृते पातकं परम् ॥
तस्मात्तां यत्नतोदद्याद्धरणं च विवर्जयेत् ॥ ४१ ॥
भूमिं सस्यवतीं दद्याद्यस्तु विप्राय मानवः ॥
समूलशूकतुल्यानि विष्णुलोके सदा वसेत् ॥ ४२ ॥
अपि गोचर्ममात्रेण भूमिं दद्याद् द्विजातये ॥
विष्णुलोकमवाप्नोति केचिदाहुर्मनीषिणः ॥ ४३ ॥
बृहस्पतिः।सुवर्णं रजतं वस्त्रं मणिं रत्नं च वासव ॥
सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति ॥ ४४ ॥
फालकृष्टां महीं दत्वा सबीजां सस्यमालिनीम् ॥
यावत्सूर्यकृतालोकास्तावत्स्वर्गे महीयते ॥ ४५ ॥

यत्किंचित्कुरुते पापं पुरुषोवृत्तिकर्षितः ॥
अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यति ॥ ४६ ॥
यथा गौर्भरते वत्सं क्षीरमुत्सृज्य क्षीरिणी ॥
स्वयं दत्ता सहस्राक्ष भूमिर्भरति भूमिदम् ॥ ४७ ॥
आदित्योवरुणोवह्निर्ब्रह्मा सोमोहुताशनः ॥
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥ ४८ ॥
महाभा०। अतिदानानि सर्वाणि पृथिवीदानमुच्यते ॥
अचला ह्यक्षया भूमिर्दोग्ध्री कामानिहोत्तमान् ४९
दोग्ध्री वासांसि रत्नानि पशून्ब्रीहियवांस्तथा ॥
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥ ५० ॥
यावद्भूमेरायुरिह तावद्भूमिदएधते ॥
न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर ॥ ५१ ॥
तपोयज्ञः श्रुतं शीलमलोभः सत्यसन्धता ॥
गुरुदैवतपूजा च एतावर्तन्ति भूमिदम् ॥ ५२ ॥
भर्तृनिःश्रेयसे युक्तास्त्यक्तात्मानोरणेहताः ॥
ब्रह्मलोकगताःसिद्धानातिक्रामन्ति भूमिदम् ॥

मृत्युर्वै किङ्करोदण्डस्तमोवह्निः सुदारुणः ॥
घोराश्च दारुणाः पाशानोपसर्पन्ति भूमिदम् ५४

अथ गोचर्मप्रमाणं बृहस्पतिः ।

दशहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्तनम् ॥
दश तान्येव विस्तारोगोचर्मैतन्महाफलम् ॥५५॥
सवृषं गोसहस्रं तु यत्र तिष्ठत्यतन्द्रितम् ॥
बालवत्सां प्रसूतानां तद्गोचर्मइति स्मृतम् ॥५६॥
वृ.पा.।दश हस्तैर्भवेद्वंशश्चतुर्भिस्तैस्तु विस्तरे ॥
दैर्घ्योपि दशभिर्वंशैर्गोचर्म परिकीर्त्तितम् ॥५७॥
षड्भिस्तु सहितान्विप्रवंशानुभयतोदश ॥
तानेव द्विगुणानाहुरिति केचिन्निवर्तनम् ॥५८॥
दण्डानां पञ्चहस्तानां चत्वारिंशद्दशाहता ॥
पञ्चभिर्गुणितासानुकैरप्युक्तं निवर्तनम् ॥५९॥

धर्मसिन्धौ। सप्तहस्तोदण्डः त्रिंशद्दण्डावर्तनंदश वर्तनानि गोचर्म ॥

अथ भूमिहर्ताफलमाह ॥ बृहस्पतिः ।

स्वदत्तां परदत्तां वा योहरेत वसुन्धराम् ॥

श्वविष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते॥६०॥
आक्षेप्ता चानुमन्ता च तमेव नरकं व्रजेत् ॥
भूमिदोभूमिहर्ता च नापरं पुण्यपापयोः ॥ ६१ ॥
हरन्तोहारयन्तश्च हन्युरासप्तमं कुलम् ॥
हरते हारयेद्यस्तु मन्दबुद्धिस्तमोवृतः ॥
सबद्धोवारुणैः पाशैस्तिर्यग्योनिषु जायते॥६२॥
ब्राह्मणस्य हृते क्षेत्रे हन्ति त्रिपुरुषं कुलम् ॥
वापिकूपसहस्रेण अश्वमेधशतेन च ॥
गवां कोटिप्रदानेन भूमिहर्ता न शुद्ध्यति॥६३॥
ब्रह्मस्वे न रतिं कुर्यात्प्राणैः कण्ठगतैरपि ॥
अनौषधमभैषज्यं विषमेतद्धलाहलम् ॥६४॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥६५॥
लोहचूर्णाश्मचूर्णं च विषं च जरयेन्नरः ॥
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् जरयिष्यति॥६६॥
मन्युप्रहरणाविप्रा राजानः शस्त्रपाणयः ॥

शत्रमेकाकिनं हन्ति ब्रह्ममन्युः कुलत्रयम् ॥ ६७॥
मन्युप्रहरणाविप्राश्चक्रप्रहरणोहरिः ॥
चक्रात्तीव्रतरोमन्युस्तस्माद्विप्रं न कोपयेत् ॥ ६८॥
अग्निदग्धाः प्ररोहन्ति सूर्यदग्धास्तथैव च॥
मन्युदग्धस्य विप्राणामंकुरोन प्ररोहति ॥ ६९॥
तेजसाग्निश्च दहति सूर्योदहति रश्मिना ॥
राजा दहति दण्डेन विप्रोदहति मन्युना ॥ ७०॥
ब्रह्मस्वेन तु यत्सौख्यं देवस्वेन तु या रतिः॥
तद्धनं कुलनाशाय भवत्यात्मविनाशनम् ॥ ७१॥
ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यद्धनम् ॥
गुरुमित्राहिरण्यं च स्वर्गस्थमपि पीडयेत् ॥ ७२॥
व्या॰स्मृ॰। शतेषु जायते शूरः सहस्रेषु च पण्डितः
वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ ७३॥
न रणे विजयाच्छूरोऽध्ययनान्न च पण्डितः॥
न वक्ता वाक्पटुत्वेन न दाता चार्थदानतः ॥ ७४॥
इन्द्रियाणां जये शूरोधर्मं चरति पण्डितः ॥
हितप्रायोक्तिभिर्वक्ता दाता सन्मानदानतः ॥ ७५॥

अथ ब्राह्मणभोजनम् ॥ यज्ञपार्श्वे।

गर्भाधानानि सर्वेषु ब्राह्मणान् भोजयेद्दश ॥
आवसथ्ये चतुर्विंशदग्न्याधाने शतात्परम् ॥७६॥
आग्रयणे प्रायश्चित्ते ब्राह्मणान् दश पञ्च वा ॥
सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ ॥७७॥
चातुर्मास्येषु चत्वारि शतानि च सुरामखे ॥
अयुतं वाजपेये च अश्वमेधे चतुर्गुणम् ॥७८॥
वृ.पा.।दक्षिणाहेम देवानां पितॄणां रजतं मतम् ॥

अथ दशदानानां प्रमाणम् ॥ धर्मसिन्धौ ।

भुवोमानं गोचर्म तिलानां द्रोणः । सुवर्णरजतयोर्दशमाषतदर्धतदर्धान्यतमम्। आज्यस्य चत्वारिंशत्पलानि । वाससस्त्रिहस्तत्वम् । धान्यस्य पञ्च द्रोणाः । एवं गुडलवणयोः । एतावत्प्रमाणाशक्तौ नित्यनैमित्तिके यथाशक्ति देयानि यथाशक्ति हिरण्यं वा तत्तत्प्रतिनिधित्वेन हिरण्यगर्भेति मन्त्रेण देयम्। नैमित्तिकादेरकरणे प्रत्यवायात ॥ अभ्युदयादिफलार्थं तु

दश दानानि शक्तिं विना न कार्याणीति भाति॥

अथ सर्वपूर्णिमासु दानानि ॥ वृ. पा. ।

पौर्णमासीषु सर्वासु मासर्क्षयुतासु च ॥
एतेषामेव दानानां फलं दशगुणं लभेत् ॥८० ॥

अथ चैत्रादिद्वादशमासानां शुक्लद्वादशीषु नक्षत्रपरत्वेन महापुण्यतमत्वामीति तेषु दानानि ॥ तत्रैव ।

भगर्क्षसंयुता चैत्रे द्वादशीतु महाफला ॥
मासे तु माधवे शुक्रे द्वादशी करसंयुता ॥ ८१ ॥
वायव्येन युता शुक्रे शुचौ मूलेन वैष्णवी॥
नभस्याश्विनयोः पुण्या श्रवणाजर्क्षसंयुता॥८२॥
पौष्णर्क्षसंयुता चोर्जे मार्गे च कृत्तिकान्विता ॥
सहस्येग्निभसंयुक्ता तपस्यादित्यभान्विता॥८३ ॥
तपस्ये गुर्वृक्षयुक्ता द्वादशी पावना स्मृता॥
नक्षत्रयुक्तास्त्वेतासु दत्तं दानाद्यनन्तकम् ॥ ८४ ॥

अथ द्वादशसंक्रान्तिषु दानानि ॥ तत्रैव ।

मेषं च मेषसंक्रान्तौ गोवृषौ वृषसंक्रमे ॥
शयनासनदानं च मिथुनोपगमे तथा ॥ ८५ ॥

सक्तून्कर्कप्रवेशे च प्रदद्याच्छर्करां शुभाम् ॥
सिंहराशौ च पात्राणां तैजसानां प्रदायकः ८६
कन्याप्रवेशे वस्त्राणां सुरभीणां पयः स्नुतम् ॥
तुलाप्रवेशे धान्यानां बीजानामपि चोत्तमम् ८७
वृश्चिके च शुभ्रस्त्राणां वेश्मनां दानमुत्तमम् ॥
धनुः प्रवेशे शस्त्राणां यानानामपि पुण्यदम् ८८
झषराशौ च दारूणां दानमग्नेः सुखप्रदम् ॥
कुम्भप्रवेशे दानं तु गवामर्थे तृणस्य च ॥८६॥
मीनप्रवेशे म्लानानां माल्यानामपि चोत्तमम् ॥

दानान्यथैतानि मया द्विजेन्द्राः,
प्रोक्तानि कालेषु मुनिः प्रदाय ॥
प्राप्नोति कामान्मनसा विमृष्टां-
स्तस्मात्प्रशंसन्तिह कालदानम् ॥६०॥

यत्र वा तत्र वा काले यद्वा तद्वा प्रदीयते ॥
विशेषार्थमिदं प्रोक्तं नान्यकालनिषेधकम् ॥६१॥

दानकालविशेषाः ॥ तत्रैव ।

चन्द्रे वा यदि वा सूर्ये दृष्टे राहोर्महाग्रहे ॥

अक्षयं कथितं दानं केचिदूचुर्विशेषतः ॥६२
द्वादशीषु च शुक्लासु विशेषाच्छ्रवणेन च ॥
तत्र यद्दीयते किञ्चित्तदनन्तं प्रजायते ॥ ६३ ॥
विशेषाद् बुधयुक्तेषु पक्षान्तेषु च सर्वदा ॥
तृतीयासु च सर्वासु शुक्लास्तत्र विशेषतः ६४
वैशाखशुक्लपक्षे तु विशेषादपि मानवैः ॥
आषाढी कार्तिकी माघी वैशाखी च विशेषतः ॥
पौर्णमास्याश्चतस्रोऽपि प्रोक्तादाने महाफलाः ॥
व्यतीपातेषु सर्वेषु मासर्क्षेषु द्विजोत्तमाः ॥
राशिसंक्रमकालेषु तीव्ररश्मेर्विशेषतः ॥ ६६ ॥

अदानेऽपि फलप्राप्तिः ॥ याज्ञवल्क्यः ।

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ॥
ये लोकादानशीलानां सतानाप्नोति पुष्कलान्६७
कुशाःशाकं पयोमत्स्यागन्धाः पुष्पं दधि क्षितिः॥
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥६८॥

भोजनविधिविचारः॥१९॥भोजनेपांक्तिवारणम्॥गोभिलः।

अग्निना भस्मना चैव स्तम्भेन सलिलेन च ॥

द्वारेण चैव मार्गेण पंक्तिभेदो बुधैः स्मृतः ॥ १ ॥

पंक्तिवारणाभावे दोषः ब्रह्मपुराणे ॥ आचा० ।

अप्येकपंक्त्यां नाश्नीयात्सम्बन्धिस्वजनैः सह ॥
कोहि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् २

आ० सू० गोभिलः ।

एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनः ॥
सर्वेषां तत्समं तेषां यावत्पंक्तिर्न भिद्यते ॥ ३ ॥

अथ भोजने मण्डलम् ॥ निर्णयसिन्धौ ॥ ब्राह्मे ।

मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः ॥
गौरमृत्तिकया वापि भस्मना गोमयेन वा ॥ ४ ॥
भृगुः। भस्मना वारिणा वापि कारयेन्मण्डलं ततः॥
चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षात्रियस्य तु ५
मण्डलाकृतिवैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥
शंखः। आदित्यावसवोरुद्रा ब्रह्मा चैव पितामहः॥
मण्डले तूपजीवन्ति तस्मात्कुर्वीत मण्डलम्॥६॥

बह्वृचपरिशिष्टे ।

दैवे चतुरस्रं पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण

सयवान् सतिलांश्च दर्भान दद्यात् इत्युक्तम् ॥७॥

तत्रैव मार्कण्डेयः ।

यातुधानाः पिशाचाश्च क्रूराये चैव राक्षसाः ॥
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् ॥ ८ ॥

मण्डलप्रमाणादिः । आ० सू० ॥ ग्रन्थान्तरं ।

विधाय दैवे पैत्र्ये च वेदांगुलप्रमाणतः ॥

वितस्तिमात्रं चतुरंगुलं वा, कोणैश्चतुर्भिर्विदधीत मण्डलम् ॥ प्राणाग्निहोत्रार्थमिदं समुक्तं महाऽनुभावेन हि हारितेन ॥ ९ ॥

द्वादशांगुलमानं तु व्रतिनां योगिनां सदा ॥
चतुरंगुलं विधातव्यं त्रिकोणं प्रेतकर्मणि ॥ १० ॥

भोजने वर्ज्यासनानि ॥ धर्मसिन्धौ ।

पालाशं दग्धमयोबद्धं च पीठं वर्जयेत् ॥

आ० सू० प्रचेताः ।

गोशकृन्मृण्मयं भिन्नं तथा पालाशपिप्पलम् ॥
लोहबद्धं तथैवार्कं वर्जयेदासनं बुधः ॥११॥

भोजनं ग्राह्यपात्राणि ॥ व्यासस्मृतौ ।

हैमराजतकांस्येषु पात्रेष्वद्यात्सदा गृही ॥
अभावे साधुगन्धेषु लोध्रद्रुमलतासु च ॥ १२॥
पलाशपद्मपत्रेषु गृहस्थोभोक्तुमर्हति ॥
ब्रह्मचारी यतिश्चैव श्रेयोयद्भोक्तुमर्हति ॥१३॥

धर्मसि०एकएवतु भुंजीतकांस्यपात्रेनान्योच्छिष्टे कदलीकुटजमधुजम्बूपनसाम्रचंपकोदुम्बरपत्राणि शस्तानि॥अर्काश्वत्थवटादिपत्राणि निषिद्धानि॥

आ०सू०व्यासः ।

मृण्मये पत्रपृष्ठे वा आयसे ताम्रभाजने ॥
नाश्नीयादपि चेद्भुंक्ते नरकं प्रतिपद्यते ॥ १५॥

भोजनकालः ॥ मनुः हारीतस्मृतौ ।

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ॥
नान्तरा भोजनं कुर्यादग्निहोत्रसमोविधिः॥१६॥

भोजने पादप्रक्षालनम् ॥ महाभारते ।

कृत्वा मूत्रपुरीषे तु रथ्योमाक्रम्य वा पुनः ॥
पादप्रक्षालनं कुर्यात् स्वाध्याये भोजने तथा॥१७॥

आर्द्रपादास्तु भुंजीत नार्द्रपादास्तु संविशेत् ॥
आर्द्रपादास्तु भुंजानोवर्षाणां जीवते शतम्॥ १८॥

आचा० आपस्तंबः ।

प्राङ्मुखोऽन्नानि भुंजीत पंचार्द्रोवाग्यतःशुचिः॥
आर्द्रपादस्तुं भुंजानः शतं वर्षाणि जीवति॥ १९॥
अत्रिस्मृ०।ऊर्ध्वजंघेषु विप्रेषु प्रक्षाल्य चरणद्वयम्॥
तावच्चण्डालरूपेण यावद्गङ्गां न मज्जति॥ २०॥

अथ भोजने दिग्विचारः॥ हारीतस्मृतौ ।

प्राङ्मुखोदङ्मुखोवापि मौनी च मितभाषणः ॥
वासिष्ठः। प्राङ्मुखोऽन्नानि भुंजीत॥ तूष्णीं सांगुष्ठं कृशग्रासं ग्रसेत् न च मुखशब्दं कुर्यात् ॥

आचा०। वामनपुराणे। भुंजीत नोदङ् न च दक्षिणामुखो, न च प्रतीचीमभिभोजनीयम् ।
मनुः।आयुष्यं प्राङ्मुखोभुंक्ते यशस्यन्दाक्षिणामुखः
श्रियम्प्रत्यङ्मुखोभुंक्तऋतंभुंक्तउदङ्मुखः ॥ २१॥

बृहत्पाराशरो ।

प्राङ्मुखादिक्रयेणाश्नन्नायुः कीर्तिं श्रियं ऋतम्॥

अविधिर्विदिगन्यास्तु यत्तदश्नन्ति राक्षसाः २२

अन्नस्तुतिः ॥ मनुः ।

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ॥
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वदा॥२३॥
हारी. स्मृ. ।अन्नमादौ नमस्कृत्य प्रहृष्टेनान्तरात्मना।

अन्नपरिवेषणम् ॥ आ॰सू॰स्मृत्यन्तरे ।

शाकादीन् पुरतः स्थाप्य भक्ष्यं भोज्यं च वामतः॥
अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम्॥२४॥
ओदने परमान्ने च आज्यपात्रं यदि स्थितम्॥
तदाज्यं च भवेद्रक्तं तदन्नं मांसमुच्यते॥ २५॥

धर्मसिन्धौ। व्याहृतिभिः गायत्र्या चाभिमन्त्र्य सत्यं त्वर्त्तेन परिषिञ्चामि इति दिवा ऋतं त्वा सत्येन परिषिञ्चामीति रात्रौ परिषेचनं कुर्यात् ॥

प्रार्थनामन्त्रः ।

अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः ॥
त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णुः पुरुषः परः॥२६

अन्नं ब्रह्म रसोविष्णुर्भोक्ता देवोमहेश्वरः ॥
एवं ध्यात्वा द्विजोभुंक्ते सोऽन्नदोषैर्न लिप्यते २७
अहंवैश्वानरो० ॥

अथापोशनम् ॥ व्यासस्मृतौ ।

अभ्युक्ष्यान्नं नमस्कारैर्भुवि दद्याद्बलित्रयम् ॥
भूपतये भुवः पतये भूतानां पतये तथा ॥२८॥
अपः प्राश्य ततः पश्चात् पञ्च प्राणाहुतीःक्रमात्॥
स्वाहाकारेण जुहुयाच्छेषमद्याद्यथा सुखम् ॥२९॥
वृ॰पा॰।प्रातर्वा यदि वा सायं नाद्यादन्नमनर्चितम्
नानाद्यमनपोशानं शुभप्रेप्सुर्द्विजः सदा ॥३०॥

आ॰ सू॰ याज्ञवल्क्यः ।

प्राणेशनमकृत्वा तु योभुंक्तेऽनापदि द्विजः ॥
भुंजानो वा तथा ब्रूयाद्गायत्र्यष्टशतं जपेत् ॥३१॥

अथ प्राणाहुतिविचारः ॥ आचा॰ विष्णुपुराणे ।

प्राणोभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणवसंयुताः ॥
पञ्चाहुतीः प्रजुहुयात्प्रलयाग्निनिभेष्विति॥३२॥

तत्रैव याज्ञवल्क्यः ।

प्राणोऽव्यानस्तथापानः समानोदानएव च ॥
ओंकारपूर्वैः स्वाहान्तैः पञ्च दद्यात्तथाहुतीः ३३
वि.पु.।पञ्च ग्रासान्महामौनं प्राणाद्याप्यायनायतत्
वृ.पा.। जिह्वादत्तं ग्रसेदन्नं दन्तैश्चैव न तत्स्पृशेत्॥
दशनैः स्पृष्टमात्रेण पुनराचमनं चरेत् ॥३४॥
तर्जनीमध्यमांगुष्ठलग्ना प्राणस्य चाहुतिः ॥
मध्यमानामिकांगुष्ठैरपानस्याहुतिः स्मृता ॥३५॥
कनिष्ठानामिकांगुष्ठैर्व्यानस्य परिकीर्तिता ॥
मध्यमानामिकास्वन्यामुदाने जुहुयाद् बुधः ३६
समाने सर्वैरुद्धृत्य आहुतेः स्यात्समानता ॥३७

अथ प्राणाग्निहोत्रे पञ्चाग्निनामानि ॥ वृ० पा० ।

मुखआहवनीयोग्निर्गार्हपत्यस्तथोदरे ॥
हृदये दक्षिणाग्निश्च गृह्याग्निश्चापि दक्षिणे ॥३८॥
सभ्यश्चोत्तरताश्चेत्यइत्यग्निस्मरणक्रमः ॥
होतारं प्राणमित्याहुरुद्गातारमपानकम् ॥ ३९॥
ब्राह्मणं व्यानमित्येवोदानमध्वर्युमित्यपि ॥

समानं चेह यज्वानमित्यृत्विजां क्रमं बुधाः॥४०॥
अहंकारं पशुं चात्र प्रणवं यूपमित्यपि ॥
बुद्धिरित्यरणिः सृष्टिर्लोमानि च कुशाः स्मृताः ४१
मनोविभक्तिर्विग्जिह्वा तज्ज्ञैरिति प्रचद्यते ॥

अथ प्राणाग्निहोत्रफलम् ॥ वृ० पा० ।

अथ विप्राग्निहोत्रस्य श्रूयतां द्विजसत्तमाः॥
वक्ष्यमाणोविधिः पुण्यः प्रेत्य चेह च पावनः॥४२॥
योविधिर्देवताभ्यस्तः संसारबन्धनाशकः॥
तद्विदस्तु दिवं यान्ति मुक्ता देवऋणेन तु ॥४३॥
उद्धरेद्यद्विदित्वाश्नन्पुरुषानेकविंशतिम् ॥
सर्वेष्टिफलभाग्यावद्ब्रह्मणः पदमव्ययम् ॥४४॥
शिखामुक्तिः ब्रह्मपाशसहस्राणि रुद्रशूलशतानि च
विष्णुचक्रसहस्राणि शिखामुक्तिं करोम्यहम् ४५

अथ चित्राहुतिः पात्रवामभागे ।

मद्भुक्तोच्छिष्टशेषं ये भुंजन्ति पितरोऽधमाः॥
तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु ॥४६॥

व्यास.। आतृप्तेरन्नमश्नीयादक्षुण्णां पात्रमुत्सृजेत्॥
उच्छिष्टमन्नमुद्धृत्य ग्रासमेकं भुवि क्षिपेत्॥ ४७॥
आ० सू०। अमृतापिधानमसि स्वाहेति हस्ते गृहीतानामपामर्द्धं पीत्वार्द्धं भूमौ निक्षिपेत् ॥
अथ भोजनप्रकारमाह ॥ आ० द० विष्णुपुराणे ।
अश्नीयात्तन्मनाभूत्वा पूर्वं तु मधुरं रसम् ॥
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ४८
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः॥
पुनरन्ते द्रवाशी च बलारोग्येन मुञ्चति ॥४९॥
श्रुतिरपि। यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति तद् यत् कणीयोन तदवतीति५०
योगशा.। अर्द्धं सव्यं जनान्नस्य तृतीयमुदकस्यतु॥
वायोः संचारणार्थं तु चतुर्थमवशेषयेत् ॥ ५१ ॥
आप.। अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशाऽरण्यवासिनः
द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः॥५२॥
मनुः। अनारोग्यमनायुष्यमस्वर्ग्यमतिभोजनम्॥

अपुण्यलोकविद्दिष्टं तस्मात्तत्परिवर्जयेत् ॥५३॥

अथ भोजने विशेषविचारः ॥ मनुः ।

नान्नमद्यादेकवासा। नाश्नीयात्सन्धिवेलायाम् ॥
अग्न्यागारे गवां गोष्ठे ब्राह्मणानां च सन्निधौ ५४
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥
नभुंजीतोद्धृतस्नेहं नातिसौहितमाचरेत् ॥ ५५॥
नातिप्रगे नातिसायं न सायं प्रातराशितः॥
न वार्यंजलिना पिवेत्।नोत्संगे भक्षयेद्भक्ष्यान् ५६
न पादौ धावयेत्कांस्ये कदाचिदभिभाजने॥
न भिन्नभाण्डे भुंजीत न भावप्रतिदूषिते ॥५७॥
शयनस्थोन भुंजीत न पाणिस्थं न चासने ॥
सर्वं च तिलसंबद्धं नाद्यादस्तमिते रवौ ॥५८॥

वृ.पा.।नाद्यादन्नं निषिद्धस्थं सन्ध्याशय्यार्धरात्रिषु

अत्रिस्मृ.।भुक्तमात्रोयदा विप्रआर्द्रपाणिस्तु तिष्ठति
लक्ष्मीर्बलं यशस्तेजआयुश्चैव प्रहीयते ॥ ५६ ॥
हस्तं प्रक्षालयित्वा यः पिवेद्भुक्त्वा द्विजोत्तमः ॥

तदन्नमसुरैर्भुक्तं निराशाः पितरोगताः ॥ ६० ॥
आयसेन तु पात्रेण यदन्नमुपदीयते ॥
श्वानविष्ठासमं भुंक्ते दाता च नरकं व्रजेत् ॥ ६१ ॥
पित्तलेन तु पात्रेण दीयमानं विचक्षणः ॥
न दद्याद्वामहस्तेन आयसेन कदाचन ॥ ६२ ॥
यस्तु संवत्सरं पूर्णं भुंक्ते मौनेन सर्वदा ॥
युगकोटिसहस्रेषु स्वर्गलोके महीयते ॥ ६३ ॥
समुत्पन्ने यदा स्नाने भुंक्ते वापि पिबेद्यदि ॥
गायत्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः ॥ ६४ ॥

वसिष्ठस्मृ.। नोत्संगे भक्षयेद्धोन भुंजीत भार्य्यया सह नाश्नीयादवीर्य्यवदपत्यं भवतीति। वाजसनेयके विज्ञायते ॥ ६५ ॥

लघुपा.। शिरोवेष्ट्यतु यो भुंक्ते दक्षिणाभिमुखस्तु यः
वामपादकरः स्थित्वा तद्वै रक्षांसि भुंजते ॥ ६६ ॥
अस्नात्वा वै न भुंजीत अजंचाग्निमपूज्य च ॥
न पर्णपृष्ठे भुंजीत रात्रौ दीपं विना तथा ॥ ६७ ॥

भुंजानेषु तु विप्रेषु योग्रे पात्रं विमुञ्चति ॥
समूढः सच पापिष्ठोब्रह्मघ्नः सखलूच्यते ॥ ६८ ॥

आ० सू० पराशरः ।

पादुकास्थोन भुंजीत पर्य्यंके संस्थितोऽपिवा ॥
शुना चाण्डालदृष्टोवा भोजनं परिवर्जयेत् ॥ ६९ ॥

लघुव्याससंहितायाम् ।

नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ॥
न च भिन्नासनगतोन शयानः स्थितोऽपि वा ७०
नोपानत्पादुकी चापि न च संविलपन्नपि ॥
वृहस्प. । न स्पृशेद्वामहस्तेन भुंजानोऽन्नं कदाचन
न पादौ न शिरोवस्ति न पद्भाभाजनं स्पृशेत् ७१
बौधायनः । भोजनं हवनं दानमुपहारः प्रतिग्रहः ॥
वहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥ ७२ ॥
लघुपा. । भोजनेषुचातिष्ठत्सु स्वस्ति कुर्वन्तियेद्विजाः
न देवास्तृप्तिमायान्ति निराशाः पितरस्तथा ७३
अत्रिस्मृ. । वहूनामेकलग्नानामेकश्चेदशुचिर्भवेत् ॥

अशौचमेकमात्रस्य नेतरेषां कथंचन ॥ ७४ ॥
एकपंक्त्युपविष्टानां भोजनेषु पृथक् पृथक् ॥
यद्येकोलभते नीलीं सर्वे तेऽशुचयः स्मृताः॥७५॥
यस्य पट्टे पट्टसूत्रे नीलीरक्तोहि दृश्यते ॥
त्रिरात्रं तस्य दातव्यं शेषाश्चैवोपवासिनः ॥७६॥
पैठीनसिः। लवणं व्यंजनं चैव घृतं तैलं तथैव च ॥
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ॥ ७७ ॥

आचारादर्शे ॥ देवलः ।

एकवस्त्रोन भुंजीत कपाटमापिधाय च ॥
वायुपु०ग्राममध्ये मृतः कश्चिन्नरोनारी चतुष्पदः॥
न कुर्यादन्नपानं च मृतं यावन्न नीयते ॥ ७८ ॥

महाभारते आचा० ।

पानीयं पायसं सर्पिर्मधुयुक्तं मधून्यपि ॥
निरस्य शेषमेतेषां न प्रदेयं तु कस्य चित्॥ ७९ ॥

तत्रैव ब्रह्मपुराणे ।

तिलकल्कं दधिक्षीरजलक्षौद्रघृतानि च॥
न त्यजेदर्धजग्धानि सक्तूंश्चाथ कदाचन ॥ ८० ॥

विष्णुः।न वहूनां प्रेक्ष्यमाणानां नैकस्मिन्वहवस्तथा।
शून्यालये वह्निगृहे देवागारे कथंचन ॥ ८१ ॥
त.यमः।खट्वारूढोन भुंजीत नचोत्तानःकदाचन
ब्रह्मपु.हस्त्यश्वरथयानोष्ट्रप्रासादस्थोन भक्षयेत् ॥
नार्द्रवासानार्द्रशिरा न चायज्ञोपवीतवान्॥८३॥
ग्रासशेषं न चाश्नीयात्पीतशेषं पिवेन्न तु ॥
शाकमूलफलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ॥८४॥

विष्णुः । न निःशेषं भुंज्यात् अन्यत्र दधि-मधुसर्पिःपयःसक्तुतिलोदकेभ्यः ॥ ८५ ॥

लघुहारीतः ।

पृथक्पानं पुनर्दानं सामिषं पयसा निशि ॥
दन्तच्छेदनमुष्णं च सप्तसक्तुषु वर्जयेत् ॥ ८६॥

वृद्धशातातपौ ।

दधिक्षीरघृतैर्भुक्त्वा प्रभूतैर्व्यञ्जनैस्तथा ॥
उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि शोधयेत् ८७
देवलः।भुक्त्वाचामेद्यथोक्तेन विधानेन समाहितः॥

शोधयेन्मुखहस्तौ च मृद्भिः संघर्षणैरपि ॥ ८८॥

आ० सू० नारदः ।

निर्माल्य तुलसीपत्रं भक्षयेद्भोजनोत्तरम् ॥
शुद्धोभवति तत्काले एवं सर्वं विधीयते॥ ८९॥
भोजनानन्तरं विष्णोरर्पितं तुलसीदलम्॥
भक्षयेद्देहशुद्ध्यर्थं चान्द्रायणशताधिकम्॥ ९०॥

धर्मसिन्धौ। तर्जन्यामुखं न शोधयेत् ॥ भोजन· गृहे च नाचामेत् ॥ न शिशुभिः सह भुंजीत ॥

अथ भक्ष्याभक्ष्यविचारः ॥ मनुः ।

लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ॥
अभक्ष्याणि द्विजातीनाममेध्येप्रभवानि च॥ ९१॥
लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथा ॥
शेलुं गण्यं च पेयूषं प्रयत्नेन विवर्जयेत् ॥ ९२॥
वृथा कृसरसंयावं पायसापूपमेव च ॥
अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ ९३॥
आनिर्दशायागोः क्षीरमौष्ट्रमैकशफं तथा ॥
आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः ९४

आरण्यानां च सर्वेषां मृगाणां माहिषं विना ॥
स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि॥९५॥
छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ॥
पलाण्डुं गृंजनं चैव मत्या जग्ध्वा पतेद् द्विजः९६
अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्॥
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥ ९७ ॥
याज्ञव.।अनर्चितं वृथामांसं केशकीटसमन्वितम्॥
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्९८ ॥
उदक्या स्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ॥
गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टं च कामतः॥९९॥
देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनांस्तथा ॥
वृथा कृसरसंयावपायसापूपशष्कुलीः ॥ १००॥
व्यासस्मृ.।पलांडुं श्वेतवृंताकं रक्तमूलकमेव च॥
गृञ्जनारुणवृक्षासृग्जन्तुगर्भफलानि च॥१०१॥
अकालकुसुमादीनि द्विजोजग्ध्वैन्दवं चरेत्॥
वाग्दूषितमविज्ञातमन्यपीडितकार्यपि ॥

भूतेभ्योऽन्नमदत्वा च तदन्नं गृहिणोदहेत् १०२
लिखितः। दिवाकपित्थच्छायायां रात्रौ दधिषु सक्तुषु
धात्रीफलेषु सर्वत्र अलक्ष्मीर्वसते सदा ॥१०३॥
अत्रिः। उष्ट्रीक्षीरमवीक्षीरं पक्वान्नं मृतसूतके ॥
पाचकान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत् ४॥
यस्तु भोजनशालायामासनस्थउपस्पृशेत् ॥
तच्चान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ५॥
पात्रोपरि स्थिते पात्रे यस्तु स्थाप्य उपस्पृशेत् ॥
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ६
अष्टशल्यागतोनीरं पाणिना पिवते द्विजः ॥
सुरापानेन तत्तुल्यं तुल्यं गोमांसभक्षणम् ॥७॥

आपस्तंबः।

जन्मप्रभृतिसंस्कारे स्मशानान्ते च भोजनम् ॥
असापिण्डैर्न कर्तव्यं चूडाकार्ये विशेषतः १०८
याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम् ॥
स्त्रीणां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत्॥९॥

ब्रह्मौदनेवसाने च सीमन्तोन्नयने तथा ॥
अन्नश्राद्धे मृतश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥
अप्रजा या तु नारी स्यान्नाश्नीयादेव तद्गृहे ॥
अथ भुंजीत मोहाद्यः पूयं सनरकं व्रजेत्॥११॥
वसिष्ठः। हस्तदत्ता तु ये स्नेहा लवणं व्यंजनानि च
दातारं नोपातिष्ठन्ति भोक्ता भुंक्ते च किल्बिषम्॥
लघुपारा• एकपंक्त्युपविष्टानां विप्राणां सह भोजने
यद्येकोपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ११३
मोहाद्भुंजीत यस्तत्र पंक्तावुच्छिष्टभोजने ॥
प्रायश्चितं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा ११४
पीयूषं श्वेतलशुनं वृन्ताकफलगृंजने ॥
पलांडुं वृक्षनिर्यासा देवस्वकवकानि च ॥११५॥
उष्ट्रीक्षीरमवीक्षीरमज्ञानाद्भुंजते द्विजः ॥
त्रिरात्रमुपवासेन पञ्चगव्येन शुद्ध्यति॥११६॥
अज्ञानाद्भुंजते विप्राः सूतके मृतकेपि वा ॥
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत्॥११७॥

गायत्र्याऽष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके॥
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रिये ॥११८॥
ब्राह्मणस्य यदा भुंक्ते द्वे सहस्रं तु दापयेत् ॥
अथवा वामदेव्येन साम्ना चैकेन शुद्ध्यति ११९
चाण्डालभांडं संस्पृष्ट्वा पीत्वा कूपगतं जलम् ॥
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् १२०
भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिवेत् ॥
ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्चैव प्रमादतः॥१२१॥
ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः॥
शूद्रस्य चोपवासेन तथा दानेन शक्तितः॥१२२॥
पिवतः पतितं तोयं भाजने मुखनिःसृतम् ॥
अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥
विद्यमानेषु हस्तेषु ब्राह्मणोज्ञानदुर्बलः ॥
तोयं पिवति वक्त्रेण श्वयोनौ जायते ध्रुवम्॥१२४॥
आप.स्मृ.अस्नात्वा चैव योभुंक्ते गायत्र्यष्टशतंजपे
श्वकाकोच्छिष्टगोभिश्च प्राजापत्याविधिः स्मृतः॥

लघुपा०। चाण्डालखातवापीषु पीत्वा च सलिलं द्विजः
अज्ञानाच्चैकनक्तेन त्वहोरात्रेण शुद्ध्यति॥ १२६॥
अर्द्धभुक्ते तु यो विप्रस्तस्मिन्पात्रे जलं पिबेत् ॥
हतं दैवं च पित्र्यं च आत्मानं चोपघातयेत्॥ १२७
वृ॰पा॰। दुग्धं सलवणं सक्तून् सदुग्धान्निशि सामिषान्
दन्तच्छिन्नान्सकृद्दन्तान्पृथक्पीतजलानपि १२८
योद्यादुच्छिष्टमाज्यं तु पीतशेषं जलं पिबेत् ॥
एकैकशो विशुद्ध्यर्थं विप्रश्चान्द्रायणं चरेत् १२९
वासांसि धावतो यस्य पतन्ति जलबिन्दवः ॥
तदपुण्यं जलस्थानं रजकस्य शिलांकितम् १३०
तत्र पीत्वा जलं विप्रः श्रान्तस्तृट्परिपीडितः ॥
तदेनसो विशुद्ध्यर्थं कुर्याच्चान्द्रायणव्रतम्॥ १३१॥
साग्निः सन्पञ्चयज्ञान्यो न कुर्वीत द्विजाधमः॥
परपाकरतो नित्यमात्मपाकविवर्जकः ॥ १३२ ॥
अदाता च सदा लुब्धः श्वपचः परिकीर्तितः ॥
यो द्विजोऽस्यान्नमश्नाति स कुर्यादैन्दवव्रतम्१३३

गृहद्वारेऽतिथौ प्राप्ते तस्यादत्वा समश्नुते ॥
अभोज्यमशनं तच्च भुक्त्वा चान्द्रायणं चरेत् १३४
सव्यहस्तस्थिते दर्भे योद्विजः समुपस्पृशेत् ॥
असृक्पानेन तुल्यं च पीत्वा चान्द्रायणं चरेत् १३५॥
भुक्त्वा शय्यागतः पीत्वा विप्रश्चान्द्रायणं चरेत्॥
अभक्ष्येण समं तद्वै प्रायश्चित्तं समं भवेत्॥१३६॥
आसनारूढपादस्तु वस्त्रस्यार्धमधः कृतः ॥
धरामुखेन योभुंक्ते द्विजश्चान्द्रायणाच्छुचिः १३७
उद्धृत्य वामहस्तेन किंचित्पिबति योद्विजः॥
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत्॥१३८
स्पृष्टेन येन सस्नायाद्यदि तद्व्रतमश्नुते ॥
चरेच्चान्द्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि वा द्विजः

आचा० ब्रह्मपुराणे ।

यस्तु पाणितले भुंक्ते यस्तु फुत्कारसंयुत म्॥
प्रसृतांगुलिभिर्यश्च तस्य गोमांसवच्च तत् ॥१४०

अथ धर्मसिन्धौ । ताम्रे गव्यं कांस्ये नारिकेलेक्षु-

रसौ सगुडं दधि सगुडमार्द्रकं च मद्यसमम् ॥ उद-
क्यामपि चाण्डालं श्वानं कुक्कुटमेव च। भुंजानो य-
दि पश्येत्तु तदन्नं तु परित्यजेत्॥पुरीषस्थानोत्पन्नतण्डु
लीयकादिकम्। शणकुसुंभालाबुवार्ताककोविदारवटा-
दिफलानि मातुलिंगं च वर्ज्यम्॥तिथौविशेषे नक्षत्र-
विशेषेवारादौ च वर्ज्यपदार्थाः सप्तम्यां न स्पृशेत्तै-
लम्। तिलभक्षणं च न। नारिकेलमष्टम्यामलावु-
नवम्यां पटोलं दशम्यां निष्पावमेकादश्यां मसूर
द्वादश्यां वार्ताकं त्रयोदश्यां वर्ज्यम् ॥ चातुर्मास्ये
निषिद्धानि ॥ प्राण्यंगचूर्णं चर्मस्थोदकं जंबीरं बीजपूरं
यज्ञशेषभिन्नं विष्णवनिवेदितान्नं दग्धान्नं मसूरं मांसं
चेत्यष्टविधमामिषं वर्जयेत् ॥ निष्पावराजमाषधान्ये
लवणशाकं वृंताकं कालिंगफलं अनेकबीजफलं नि-
र्बीजं मूलकं रक्तमूलकं कूष्माण्डं इक्षुदण्डं नूतनबद-
रीधात्रीफलानि चिंचां[1] मंचकादिशयनमनृतुकाले
भार्यां परान्नं मधु पटोलं माषकुलित्थसितसर्षपांश्च
वर्जयेत् । वृंताकाबिल्वोदुम्बरकालिंगाभिः सटास्तु
वैष्णवैः सर्वमासेषु वर्ज्याः ॥

१ इमली।

अथ अभोज्यान्नमाह ॥ मनुः ।

गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम् ॥
स्तेनगायकयोश्चान्नं तक्ष्णोवार्धुषिकस्य च ॥
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च १४१
अभिशस्तस्य षण्ढस्य पुंश्चल्यादाम्भिकस्य च ॥
शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च ॥१४२॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ॥
उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् १४३
अनार्चितं वृथा मांसमवीरायाश्च योषितः ॥
द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम् ॥१४४॥
पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा॥
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥१४५॥
कर्मारस्य निषादस्य रङ्गावतारकस्य च ॥
सुवर्णकर्त्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥१४६॥
श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च॥
रंजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥१४७॥

मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः॥
अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥१४८॥
राजान्नं तेजआदत्ते शूद्रान्नं ब्रह्मवर्चसम्॥
आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः॥१४६॥
कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च॥
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ॥
पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम्॥
विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणोमलम्१५१
यएतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्तिताः॥
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः१५२
भुक्त्वातोऽन्यतमस्यान्नममत्याक्षपणं त्र्यहम् ॥
मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेव च१५३
वसिष्ठः। समर्घं धान्यमुद्धृत्य महार्घं यःप्रयच्छति॥
सवै वार्धुषिकोनाम ब्रह्मवादिषु गर्हितः ॥१५४॥
वार्धुषिं ब्रह्महन्तारं तुलया समतोलयत् ॥
अतिष्ठद् भ्रूणहा कोट्यां वार्धुषिन्र्यकम्पपातह १५५

अथ नीलिनिषेधः ॥ अंगिरास्मृतौ ।

स्नानं दानं जपोहोमःस्वाध्यायःपितृतर्पणम् ॥
स्पृष्ट्वा तस्य महापापं नीलीवस्त्रस्य धारणम् १५६
नीलीरक्तं यदा वस्त्रमज्ञानेन तु धारयेत् ॥
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुद्धचति १५७
नीलीदारु यदा भिंद्याद्ब्राह्मणं वै प्रमादतः ॥
शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत् १५८
नीलीवृक्षेण पक्कं तु अन्नमश्नाति चेद्द्विजः ॥
आहारवमनं कृत्वा पञ्चगव्येन शुद्धचति॥१५६॥
भक्षेत्प्रमादतोनीलीं द्विजातिस्त्वसमाहितः॥
त्रिषु वर्णेषु सामान्यं चान्द्रायणमिति स्थितम् ६०
नीलीरक्तेन वस्त्रेण यदन्नमुपदीयते ॥
नोपतिष्ठति दातारं भोक्ता भुंक्ते तु किल्विषम् १६१
नीलीरक्तेन वस्त्रेण यत्पाकं श्रापितं भवेत् ॥
तेन भुक्तेन विप्राणां दिनमेकमभोजनम् ॥१६२॥
मृते भर्तरि या नारी नीलीवस्त्रं प्रधारयेत् ॥

भर्ता तु नरकं याति सा नारी तदनन्तरम् १६३
नील्या चोपहते क्षेत्रे सस्यं यत्तु प्ररोहति ॥
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत्॥
देवद्रोणे वृषोत्सर्गे यज्ञे दाने तथैव च ॥
अत्रस्नानं न कर्तव्यं दूषिता च वसुन्धरा॥१६५॥
वापिता यत्र नीली स्यात्तावद्भूरशुचिर्भवेत्॥
यावद् द्वादश वर्षाणि अतऊर्ध्वं शुचिर्भवेत् १६६॥

अथ पादुकानिषेधः ॥ आपस्तम्बस्मृतौ ।

अग्न्यागारे गवांगोष्ठे ब्राह्मणानां च सन्निधौ ॥
स्वाध्याये भोजने चैव पादुकानां विसर्जनम् १६७
अङ्गि·स्मृ·अग्न्यागारे गवां गोष्ठे देवब्राह्मणसान्निधौ
आचरेज्जपकाले च पादुकानां विसर्जनम्॥१६८॥
पादुकासनमारूढोगेहात्पञ्चगृहं व्रजेत् ॥
छेदयेत्तस्य पादौ तु धार्मिकः पृथिवीपतिः १६६
अग्निहोत्री तपस्वी च श्रोत्रियोवेदपारगः ॥
एते वै पादुकैर्यान्ति शेषान्दण्डेन ताडयेत् १७०

अथ भक्ष्यमाह ॥ मनुः ।

दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसम्भवम् ॥
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥ १७१ ॥
यत्किञ्चित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् ॥
तत्पर्युषितमप्याद्यं हविःशेषं च यद्भवेत् ॥ १७२ ॥
चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ॥
यवगोधूमजं सर्वं पयसश्चैव विक्रिया ॥ १७३ ॥

बृ॰पा॰ । विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ॥
पूर्वसंकल्पितानर्थान्भोज्यांस्तानब्रवीन्मनुः १७४
पर्युषितं चिरस्थं च भोज्यं स्नेहसमन्वितम् ॥
यवगोधूमावस्नेहौ ततोगोरसविक्रयाः ॥ १७५ ॥

व्यासस्मृतौ ।

द्विजभोज्यानि गव्यानि माहिष्याणि पयांसि च ॥
निर्दशासन्धिसम्बन्धिवत्सवन्ती पयांसि च १७६
अश्वलीढमगोघ्रातमस्पृष्टं शूद्रवायसैः ॥
अनुच्छिष्टमसंदुष्टमपर्युषितमेव च ॥ १७७ ॥
अम्लानवाह्यमन्नाद्यमाद्यं नित्यं सुसंस्कृतम् ॥

कृसरापूपसंयावपायसं शष्कुलीति च ॥ १७८ ॥
वसिष्ठः।उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम्
भोज्यं प्रजापतिर्मेने अपि दुष्कृतकारिणः॥ १७९॥
देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ॥
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत् १८०
तस्मात्तदन्नमुद्धृत्य शेषं संस्कारमर्हति ॥
अत्रिः।अन्त्यजस्थास्तु येवृक्षावहुपुष्पफलोपगाः॥
उपभोग्यास्तु ते सर्वे पुष्पेषु च फलेषु च ॥१८१॥
लघुपा॰।घृतं क्षीरं तथा तैलं गुडं तैलेन पाचितम्॥
गत्वा नदीतटे विप्रोभुंजीयात् शूद्रभाजने १८२
वृ॰पा॰। अपितं शूद्रगेहेन्नं कन्दुपक्वं च यद्भवेत् ॥
नीत्वा नद्यादिके तद्वै प्रोक्ष्य भुंजन्न दोषभाक् ॥
लघुपा॰।शुष्कान्नं गोरसं स्नेहं शूद्रवेशेण आहृतम्
पक्वं विप्रगृहे भुंक्ते भोज्यं तं मनुरब्रवीत्॥ १८४॥
मनुः।एधोदकं मूलफलमन्नमभ्युद्यतं च यत् ॥
सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्॥ १८५॥

ग्रन्था ।एकेनान्नंफलंद्वाभ्यांत्रिभिःकन्दंन दुष्यति
जलाग्निलवणानांस्यात्भक्ष्याभक्ष्यविनिर्णये १८६
यमः।अपक्वं महिषीक्षीरं अजा चैव विशेषतः॥
गोदुग्धं च सदा पक्वं पक्वं स्यात्तण्डुलैर्विना १८७

अथ भोज्यान्नमाह ॥ वृ०पा० ।

अमृतं ब्राह्मणस्यान्नं क्षात्रियान्नं पयः स्मृतम् ॥
वैश्यस्य त्वन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् १८८
आमं शूद्रस्य शूद्रान्नं पक्वमुच्छिष्टमुच्यते ॥
तस्मादामं च पक्वं च शूद्रस्य परिवर्जयेत् ॥१८६॥
कणभिक्षां निराकुर्याद्यदि कुर्यादवृत्तिकः ॥
सच्छूद्राणां गृहे कुर्वन्न तद्दोषेण लिप्यते ॥ १६०॥
विशुद्धान्वयसम्भूतोनिवृत्तोमद्यमांसतः ॥
द्विजभक्तोवणिग्वृत्तिः ससच्छूद्रःप्रकीर्तितः १६१
भोज्याशनास्तु सच्छूद्रा अभोज्यान्नाः परे स्मृताः
आमाशनानि भोज्यानि शृतमुच्छिष्टमुच्यते १६२
दासनापितगोपालकुलमित्रार्धसीरिणः ॥

भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् १९३
मनुरपि। अर्द्धिकः कुलमित्रं च गोपालोदासनापितौ
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् १९४
आ॰स्मृ॰। ब्राह्मणस्य सदा भुंक्ते क्षत्रियस्य तु पर्वणि
वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन ॥१९५॥
वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ॥
अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम्॥ १९६
व्यवहारानुरूपेण धर्मेणच्छलवर्जितम् ॥
क्षत्रियस्य पयस्तेन भूतानां यच्च पालनम् १९७
स्वकर्मणा च वृषभैरनुसृत्याद्य शक्तितः ॥
खलयज्ञातिथित्वेन वैश्यान्नं तेन संस्कृतम्॥ १९८
अज्ञानतिमिरान्धस्य मद्यपानरतस्य च ॥
रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम्॥ १९९॥
आममांसं मधु घृतं धानाः क्षीरं तथैव च ॥
गुडस्तक्रं रसाग्राह्या निवृत्तेनापि शूद्रतः॥ २००॥
शाकं मांसं मृणालानि तुम्बुरुः सक्तवस्तिलाः ॥

रसाः फलानि पिण्याकं प्रतिग्राह्याहि सर्वतः २०१
महाभा. ब्राह्मणाब्राह्मणस्येह भोज्याये चैवक्षत्रियाः
वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्जिताः २०२
ब्राह्मणाः क्षत्रियावैश्याभोज्यावै क्षत्रियस्यह ॥
वर्जनीयास्तु वै शूद्राः सर्वभक्षाविकर्मिणः ॥२०३॥
वैश्यास्तु भोज्याविप्राणां क्षत्रियाणां तथैव च ॥
नित्याभयोविविक्ताश्च चातुर्मास्यरताश्च ये २०४
शूद्राणामथ योभुंक्ते सभुंक्ते पृथिवीमलम् ॥
मलं नृणां सापिवति मलं भुंक्ते जनस्य च॥ २०५॥
शूद्राणां यस्तथा भुंक्ते सभुंक्ते पृथिवीमलम्॥
पृथिवीमलमश्नन्ति ये द्विजाः शूद्रभोजिनः २०६

अथ वर्णधर्माः स्वधर्मत्यागिनां गतयः तथा
ब्राह्मणगुर्वादिलक्षणम् ॥ ११ ॥ मनुः ।

सर्वस्यास्य तु सर्गस्य गुप्त्यर्थ समहाद्युतिः॥
मुखवाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् ॥ १ ॥
अध्यापनमध्ययनं यजनं याजनं तथा ॥
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ २ ॥

प्रजानां रक्षणं दानमिज्याध्ययनमेव च ॥
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ ३ ॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च ॥
वणिक्पथं कुसीदं च वैश्यस्य कृषिरेव च ॥ ४ ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ॥
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ५ ॥
शंखोपि॥यजनं याजनं दानं तथैवाध्यापनक्रिया॥
प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत् ॥ ६ ॥
दानं चाध्ययनं चैव यजनं च यथाविधिः ॥
क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम् ॥ ७ ॥
क्षत्रियस्य विशेषेण प्रजानां परिपालनम् ॥
कृषिगोरक्षवाणिज्यं विशश्च परिकीर्तितम्॥ ८ ॥
शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाप्यथ॥
क्षमा सत्यं दमः शौचं सर्वेषामविशेषतः ॥ ९ ॥
वृ.पा.॥यजनंयाजनंविप्रेतथा दानप्रतिग्रहौ॥
अध्यापनमध्ययनंकर्माण्येतानि षट् तथा॥ १० ॥

प्रजानां रक्षणं दानमरीणां निग्रहस्तथा ॥
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम् ॥ ११ ॥
यजनाध्ययने दानं पाशुपाल्यं तथा विशि॥
वाणिज्यं च कुसीदं च कर्म षट्कं प्रकीर्तितम् १२
शुश्रूषा ब्राह्मणादीनां तदाज्ञापालनं तथा॥
एषधर्मःस्मृतःशूद्रे वाणिज्येन तु जीवनम्॥ १३
सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्षणम् ॥
भिन्नवृत्तिर्यथा न स्यात्कुर्याद्विप्रस्तथा च तत् १४
कुर्वन्नुक्तानि कर्माणि वृत्त्या वा क्षत्रियस्य च ॥
वृत्त्यभावे द्विजोजीवेद्भिन्नवृत्तिं विवर्जयेत् १५
प्रजानां पालनं दानं शस्त्रवृत्तिःप्रचण्डता॥
निर्जयः परसैन्यानामेषधर्मः स्मृतोनृपे ॥ १६ ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्॥
मालाकारइवारामे प्रजासु स्यात्तथा नृपः॥ १७॥
लोहकर्मरथानां तु गवां च परिपालनम्॥
कुसीदकृषिवाणिज्यं वैश्यवृत्तिरुदाहृता ॥ १८ ॥

शूद्रस्य द्विजसुश्रूषा परोधर्मः प्रकीर्तितः ॥
यदन्यत्कुरुते पुण्यं तद्भवेत्तस्य निष्फलम्॥ १९॥
लवणं मधु तैलं च दधि तक्रं घृतं पयः ॥
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वस्य विक्रयम्॥ २०॥

वसिष्ठस्मृतौ ।गायत्र्या छन्दसा ब्राह्मणमसृजत्॥ त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा।शूद्रमित्यसंस्कार्योविज्ञायते॥त्रिष्वेव निवासः स्यात्सर्वेषां सत्यमक्रोधोदानमहिंसा प्रजननं च॥

गीतायां।ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ २१॥
शमोदमस्तपः शौचं क्षान्तिरार्जवमेव च ॥
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् २२
शौर्यं तेजोधृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ २४॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्॥

परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ २५ ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥
अत्रिः। तदेतत्कर्माभिहितं संस्थिता यत्र वर्णिनः
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम् ॥ २६ ॥
आत्मीये संस्थितो धर्मे शूद्रोपि स्वर्गमश्नुते ॥
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥ २७ ॥
गीता। श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ २८ ॥
दक्षः। स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः ॥
अज्ञानादथ वा लोभात्स तेन पतितो भवेत् २९

पराशरश्चात्रिवसिष्ठाः।

सद्यः पतति मांसेन लाक्षया लवणेन च ॥
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ ३० ॥
अत्रिः। प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः ॥
याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम् ३१
जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ॥

देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ ३२॥

वृ.पा. । विक्रयं मद्यमांसानामभक्ष्यस्य च भक्षणम्॥
अगम्यागामिता चौर्यं शूद्रे स्युः पातहेतवः॥ ३३॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ॥
वेदाक्षरविचारेण शूद्रस्य नरको ध्रुवम् ॥ ३४ ॥

गौतमः । अथाहास्य वेदमुपशृण्वतः ॥ त्रपुजतुभ्यां श्रोत्रप्रतिपूर्णं उदाहरणे जिह्वाछेदः धारणे शरीरभेदः आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः शतम् ॥ ३५ ॥

लघु. । दुःशीलोपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः
कः परित्यज्य दुष्टां गां दुहेच्छीलवतीं खरीम्॥ ३६॥
गौतमः । समासमाभ्यां विषमसमे पूजान्तरानार्चितश्च
ग्रन्था. । अपूज्या यत्र पूज्यन्ते पूज्यपूजाव्यतिक्रमः॥
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम्॥ ३८॥
अत्रिः । अव्रताश्चानधीयाना यत्र भैक्ष्यचरा द्विजाः॥
तं ग्रामं दण्डयेद्राजा चौरभुक्तप्रदण्डवत्॥ ३९ ॥

विद्वद्भोज्यमविद्वांसोयेषु राष्ट्रेषु भुंजते ॥
तेऽप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम्॥४०॥
ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान् ॥
तत्र वर्षति पर्जन्योयत्रैतान्पूजयेन्नृपः ॥ ४१ ॥
मनुः।जातीमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः॥
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ ४२ ॥
कात्या.।यत्रविप्रोन विद्वान्स्यात्क्षात्रियं तत्रयोजयेत्
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥४३॥
आपस्तंबः।शूद्रान्नं शूद्रसंपर्कःशूद्रेणैव सहासनम्॥
शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ४४
वसिष्ठः।संवत्सरेण पतति पतितेन सहाचरन्॥
याजनाध्यापनाद्यौनादन्नपानासनादपि ॥४५॥
मनुः।न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्॥
नचास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥४६॥
योह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् ॥
सोऽसंवृतं नाम तमः सहते नैव मज्जति ॥४७॥

याज्ञव०। विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतोदमः।

अथ ब्राह्मणलक्षणम् ॥ वसिष्ठस्मृतौ ।

योगस्तपोदमोदानं सत्यं शौचं दया श्रुतम् ॥
विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ४९

सर्वत्र दान्ताः श्रुतिपूर्णकर्णा जितेन्द्रिया प्राणिवधे निवृत्ताः ॥ प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥५०॥

आह्निककारिकासु ।

शान्ताः सन्तः सुशीलाश्च सर्वभूतहिते रताः ॥
क्रोधं कर्तुं न जानन्ति एतद्ब्राह्मणलक्षणम् ५१
सन्ध्योपासनशीलश्च सौम्यचित्तोदृढव्रतः ॥
समः परेषु च स्वेषु एतद्ब्राह्मणलक्षणम् ॥५२॥
एकाहारश्च सन्तुष्टःस्वल्पाशी स्वल्पमैथुनः॥
ऋतुकालाभिगामी च एतद्ब्राह्मणलक्षणम् ५३
परान्नं परवित्तं च पथि वा यदि वा गृहे॥
अदत्तं नैव गृह्णाति एतद्ब्राह्मणलक्षणम्॥५४॥

सत्यं ब्रह्म तपोब्रह्म ब्रह्म चेन्द्रियनिग्रहः ॥
सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणम् ॥५५॥
आत्रिस्मृ०शौचं मंगलमायासअनसूयाऽस्पृहा दमः
लक्षणानि च विप्रस्य तथा दानं दयापि च ५६
न गुणान्गुणिनोहन्ति स्तौति चान्यान् गुणानपि
न हसेच्चान्यदोषांश्च सानसूया प्रकीर्तिता ॥५७॥
अभक्ष्यपरिहारश्चासंसर्गश्चाप्यनिन्दितैः ॥
आचारेषु व्यवस्थानं शौचमित्यभिधीयते॥५८॥
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ॥
एतद्धि मंगलं प्रोक्तमृषिभिर्धर्मवादिभिः ॥५९ ॥
शरीरं पीड्यते येन शुभेन ह्यशुभेन वा ॥
अत्यन्तं तं न कुर्वीत अनायासःसउच्यते॥ ६० ॥
यथोत्पन्नेन कर्तव्यः सन्तोषः सर्ववस्तुषु॥
न स्पृहेत्परदारेषु साऽस्पृहा च प्रकीर्तिता॥ ६१ ॥
वाह्यमाध्यात्मिकं वापि दुःखमुत्पाद्यतेपरैः॥

न कुप्यति न चाहन्ति दमइत्यभिधीयते ॥ ६२ ॥
अहन्यहनि दातव्यमदीनेनान्तरात्मना ॥
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ॥ ६३ ॥
परस्मिन्बन्धुवर्गे वा मित्रे द्वेष्ये रिपौ तथा ॥
आत्मवद्वर्तितव्यं हि दयैषा परिकीर्तिता ॥ ६४ ॥
यश्चैतैर्लक्षणैर्युक्तोगृहस्थोपि भवेद् द्विजः ॥
सगच्छति परं स्थानं जायते नेह वै पुनः ॥ ६५ ॥
देवोमुनिर्द्विजोराजा वैश्यःशूद्रोनिषादकः ॥
पशुर्म्लेच्छोऽपि चाण्डालोविप्रा दश विधाःस्मृताः
सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम् ॥
अतिथिं वैश्वदेवं च देवब्राह्मणउच्यते ॥ ६७ ॥
शाके पत्रे फले मूले वनवासे सदा रतः ॥
निरतोऽहरहः श्राद्धे सविप्रोमुनिरुच्यते ॥ ६८ ॥
वेदान्तं पठते नित्यं सर्वसंगं परित्यजेत् ॥
सांख्ययोगविचारस्थः सविप्रोद्विजउच्यते ॥ ६९ ॥
अस्त्राहताश्च धन्वानः संग्रामे सर्वसन्मुखे ॥

आरम्भे निर्जितायेन सविप्रः क्षत्रउच्यते ॥ ७०॥
कृषिकर्मरतोयश्च गवां च प्रतिपालकः ॥
वाणिज्यव्यवसायश्च सविप्रोवैश्यउच्यते ॥ ७१॥
लाक्षालवणसंमिश्रं कुसुंभं क्षीरसर्पिषः ॥
विक्रता मधुमांसानां सविप्रः शूद्रउच्यते॥७२॥
चोरश्च तस्करश्चैव सूचकोदंशकस्तथा ॥
मत्स्यमांसे सदा लुब्धोविप्रोनिषादउच्यते॥७३॥
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः ॥
तेनैव सच पापेन विप्रः पशुरुदाहृतः ॥७४॥
वापीकूपतडागानामारामस्य सरःसु च ॥
निश्शंकं रोधकश्चैव सविप्रोम्लेच्छउच्यते ॥७५॥
क्रियाहीनश्च मूर्ख श्च सर्वधर्मविवार्जितः ॥
निर्दयः सर्वभूतेषु विप्रश्चाण्डालउच्यते ॥७६॥
जन्मना ब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते ॥
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥७७॥
वेदशास्त्राण्यधीते यः शास्त्रार्थं च निबोधयेत्।

तदासौ वेदवित्प्रोक्तोवचनं तस्य पावनम् ॥७८॥
व्यासस्मृ०। ब्रह्मबीजसमुत्पन्नोमन्त्रसंस्कारवर्जितः।
जातिमात्रोपजीवी च सभवेद्ब्राह्मणः समः॥७९॥
गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च ॥
नाध्यापयति नाधीते सभवेद्ब्राह्मणब्रुवः ॥८०॥
अग्निहोत्री तपस्वी च वेदमध्यापयेच्चयः ॥
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥८१॥
मनुः। उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः॥
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ ८२ ॥
आ०सू०। सत्यवाक् धृतिमान्दक्षः सर्वभूतदयापरः॥
आस्तिको वेदनिरतः शुचिराचार्यउच्यते ॥८३॥
व्यासः। मीमांसते च योवेदान्षड्भिरंगैःसविस्तरैः
इतिहासपुराणानि सभवेद्वेदपारगः ॥ ८४ ॥
मनुः। एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ॥
योऽध्यापयति वृत्त्यर्थमुपाध्यायः सउच्यते ॥८५॥
निषेकादीनि कर्माणि यः करोति यथाविधि ॥

संभावयति चान्नेन सविप्रोगुरुरुच्यते ॥ ८६ ॥
अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ॥
यः करोति वृतोयस्य सतस्यर्त्विगिहोच्यते ॥८७॥
याज्ञव.।सगुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति॥
उपनीय ददद्वेदमाचार्यः सउदाहृतः ॥ ८८ ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ॥
शंखः।सगुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति॥
भृतकाध्यापकोयस्तु उपाध्यायः सउच्यते ॥८६॥
वसिष्ठः।उपनीयतुयःकृत्स्नंवेदमध्यापयेत्सआचार्यः
यस्त्वेकदेशं सउपाध्योयश्च वेदांगानि ॥ ६० ॥
तपोदानोपहारेषु व्रतेषु नियमेषु च ॥
इज्याध्ययनधर्मेषु योनासक्तः सनिष्क्रियः ॥६१॥
दीर्घवैरमसूयां च असत्यं ब्रह्मदूषणम् ॥
पैशुन्यं निर्दयत्वं च जानीयाच्छूद्रलक्षणम् ॥६२॥
असूयुंपिशुनश्चैव कृतघ्नोदीर्घरोषकः ॥
चत्वारः कर्म चाण्डालाजन्मतश्चापिपञ्चमः ६३

अथ गृहस्थाश्रमप्रशंसा गोमहिमा यमनियमाः गृहस्थधर्माः सदाचारधर्मानाह ॥ १७ ॥ वासिष्ठस्मृतौ ।

गृहस्थएव यजते गृहस्थस्तप्यते तपः ॥
चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥१॥
यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम् ॥
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् २
यथा मातारमाश्रित्य सर्वे जीवन्ति जन्तवः ॥
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः ॥ ३ ॥

नित्योदकी नित्ययज्ञोपवीती, नित्यस्वाध्यायी पतितान्नवर्जी ॥ ऋतौ गच्छन्विधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ ४ ॥

शंखोपि।वानप्रस्थोब्रह्मचारी यतिश्चैव तथा द्विजः॥
गृहस्थस्य प्रसादेन जीवन्त्येते यथाविधि ॥ ५ ॥
गृहस्थएव यजते गृहस्थस्तपते तपः ॥
ददाति च गृहस्थश्च तस्माच्छ्रेयान् गृहाश्रमी॥६॥
व्यासस्मृ-गृहाश्रमात्परोधर्मोनास्तिनास्तिपुनःपुनः

सर्वतीर्थफलं तस्य यथोक्तं यस्तु पालयेत् ॥ ७ ॥
गुरुभक्तोभृत्यपोषी दयावाननसूयकः ॥
नित्यजापी च होमी च सत्यवादी जितेन्द्रियः ८
स्वदारे यस्य सन्तोषः परदारानिवर्तनम् ॥
अपवादोऽपि नो यस्य तस्य तीर्थफलं गृहे॥ ९ ॥
परदारान् परद्रव्यं हरते योदिनेदिने ॥
सर्वतीर्थाभिषेकेण पापं तस्य न नश्यति ॥१० ॥
प्रतिश्रयं पादशौचं ब्राह्मणानां च तर्पणम्॥
न पापं संस्पृशेत्तस्य वालिभिक्षां ददाति यः ११
दक्षस्मृ.। देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते॥
गृहस्थःप्रत्यहं यस्मात्तस्माच्छ्रेष्ठाश्रमोगृही॥१२ ॥
त्रयाणामाश्रमाणां तु गृहस्थोयोनिरुच्यते॥
सीदमानेन तेनैव सीदन्तीहेतरे त्रयः ॥ १३॥
मूलत्राणे भवेत्स्कन्धः स्कन्धाच्छाखेति पल्लवाः॥
मूलेनैव विनष्टेन सर्वमेतद्विनश्यति ॥ १४॥
तस्मात्सर्वप्रयत्नेन रक्षणीयोगृहाश्रमी॥

राज्ञा चान्यैस्त्रिभिः पूज्योमाननीयश्च सर्वदा १५
गृहस्थोऽपि क्रियायुक्तोगृहेण न गृही भवेत् ॥
न चैव पुत्रदारेण स्वकर्मपरिवर्जितः ॥ १६ ॥
अहुत्वा च तथा जप्त्वा अदत्वा यश्च भुंजते॥
देवादीनामृणी भूत्वा दरिद्रश्च भवेन्नरः ॥१७॥
एकएव हि भुंक्तेन्नमपरोन्नेन भुज्यते ॥
न भुज्यते सएवैकोयोभुंक्ते तु समांशकम् ॥१८॥
विभागशीलोयोनित्यं क्षमायुक्तोदयालुकः॥
देवतातिथिभक्तश्च गृहस्थः सतु धार्मिकः ॥१९॥
दया लज्जा क्षमा श्रद्धा प्रज्ञा त्यागः कृतज्ञता ॥
गुणायस्य भवन्त्येते गृहस्थोमुख्यएव सः ॥२०॥

अथ गोमाहिमा ॥ आत्रिः ।

यस्यैकापि गृहे नास्ति धेनुर्वत्सानुचारिणी ॥
मंगलानि कुतस्तस्य कुतस्तस्य तमःक्षयः ॥१॥
यन्न वेदध्वनिश्रान्तं न च गोभिरलंकृतम् ॥
यन्न बालैः परिवृतं श्मशानमिव तद्गृहम् ॥२॥

महाभारते ।

गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
गावोभूतं च भव्यं च गावः पुष्टिः सनातनी ॥
गावोलक्ष्म्यास्तथा मूलं गोषु दत्तं न नश्यति ३
अन्नं हि परमं गावोदेवानां परमं हविः ॥
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ॥४॥
गावोयज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः॥
गावोभविष्यं भूतं च गोषु यज्ञाः प्रतिष्ठिताः॥५॥
सायं प्रातश्च सततं होमकाले महाद्युते ॥
गावोददति वै हौम्यमृषिभ्यः पुरुषर्षभ ॥६॥
यानि कानि च दुर्गाणि दुष्कृतानि कृतानि च॥
तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ॥७॥

पितामहउवाच ।

यज्ञांगं कथितागावोयज्ञएव च वासव ॥
एताभिश्च विनायज्ञोन वर्तेत कथं चन ॥८॥
धारयन्ति प्रजाश्चैव पयसा हविषा तथा ॥
एतासां तनयाश्चापि कृषियोगमुपासते ॥९॥

जनयन्ति च धान्यानि वीजानि विविधानि च॥
ततोयज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः॥१०॥

वसिष्ठ उवाच ।

गावोममाग्रतोनित्यं गावः पृष्ठतएव च ॥
गावोमे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥ ११॥
इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा॥
यदह्ना कुरुते पापं तस्मात्सपरिमुच्यते ॥१२॥

बृ.पा.। स्पृष्टाश्च गावः शमयन्ति पापं,संसेविताश्चोपनयन्ति वित्तम् । ताएव दत्तास्त्रिदिवं नयन्ति,गोभिर्नतुल्यं धनमस्ति किञ्चित्॥१३॥
यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवःस्थितः।
पृष्ठे नारायणस्तस्थौ श्रुतयश्चरणेषु च ॥ १४ ॥
अन्यायादेवताः सर्वागवां लोमसु ताः स्थिताः॥
सर्वदेवमयागावस्तुष्येत्तद्भक्तितोहरिः ॥ १५ ॥
दहन्ति स्पर्शनात्पापं पयसा पोषयन्ति याः ॥
प्रापयन्ति दिवं दत्ताःपूज्यागावःकथं न ताः१६

यत्खुराहतभूमेस्तु उत्पद्यन्ते रजःकणाः ॥
प्रलीनं पातकं तैस्तु पूज्यागावःकथं न ताः॥१७॥
शकृन्मूत्रं तु यस्यास्तु पीतं दहति पातकम् ॥
किमपूज्यं हि तस्यागोरिति पाराशरोऽब्रवीत्॥१८॥
गौरवत्सा न दोग्धव्या न तथा गर्भसन्धिनी॥
प्रसूता च दशाहार्वाग्दोग्धिचेन्नरकं व्रजेत् ॥१९॥
दुर्बला व्याधिता भीता पुष्पिता या द्विवत्सभूः ॥
साधुभिर्नैव दोग्धव्या धार्मिकैर्धनमीप्सुभिः॥२०॥
यथोक्तविधिना चैतावर्णैःपूज्याःसुपूजिताः॥
पालयन्पूजयन्नेताः प्रेत्येह च समोदते ॥२१॥
दक्षिणाभिमुखागावउत्तराभिमुखाअपि ॥
बन्धनीयास्तथा चैतानप्राक्पश्चिमतोमुखाः॥२२॥
गावोदेवाः सदा रक्ष्याः पाल्याः पोष्याश्च सर्वदा॥
ताडयन्ति च ये पापाये चाक्रोशन्ति तानराः ॥
नरकाग्नौ च पच्यन्ते गोनिःश्वासप्रपीडिताः२३
यःसंस्मृत्य नमस्कृत्य कुर्यात्तां च प्रदक्षिणाम्॥

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥२४॥
तृणोदकादिसंयुक्तं योददाति गवाह्निकम्॥
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः ॥२५॥
गवां कण्डूयनं धर्म्यं गोप्रदानसमं भवेत्॥
तुल्यं गोशतदानस्य भयतोगां प्रपाति यः॥२६॥
पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च॥
गवां शृंगोदकस्यापि कलां नार्हन्ति षोडशीम्॥२७
शृंगमूले स्थितोब्रह्मा शृंगमध्ये तु केशवः॥
शृंगाग्रे शङ्करं विद्यात् त्रयोदेवाः प्रकीर्तिताः॥२८
तीर्थानि यस्याः शृंगाग्रे स्थावराणि चराणि च॥
सर्वे देवाः स्थितादेहे सर्वदेवमयो हि गौः॥२९॥
ललाटाग्रे स्थितादेवा नासा मध्ये तु षण्मुखः॥
कंबलाश्वतरौ नागौ कर्णयोस्तुव्यवस्थितौ॥३०॥
सौरभेय्याः स्थितौ तस्याश्चक्षुषोः शशिभास्करौ॥
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः॥३१
सरस्वती च हुंकारे यमयक्षौ च गंडयोः॥

ऋषयोरोमकूपेषु प्रस्रावे जाह्नवीजलम् ॥ ३२ ॥
कालिंदीगोमये तस्यादेवताअपराअपि ॥
अष्टाविंशति देवानां कोटयोलोमसु स्थिताः॥ ३३॥
उदरे गार्हपत्योग्निर्हृदये दक्षिणस्तथा ॥
मुखेप्याह्वनीयस्त कुक्षौ सभ्यावसथ्यकौ॥ ३४॥
एवं योवर्तते गोषु ताडनक्रोधवर्जितः ॥
सुपुष्टां श्रियमाप्नोति स्वर्गलोके महीयते॥ ३५ ॥
कुलं तस्यान लंघेत पूतिगन्धं न वर्जयेत् ॥
यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्धते ॥ ३६ ॥
पयस्विनीं सवत्सां यःसुशीलां तरुणीं तथा॥
गां शिवस्यालये दद्यात्तेन दत्तं जगत्त्रयम्॥ ३७॥

अथ यमनियमाः ॥ मनुः ।

यमान्सेवेत सततं न नित्यं नियमान्बुधः॥
यमान्पतत्यकुर्वाणोनियमान्केवलान्भजन् ॥ १ ॥
आत्रिसं॰।आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम्
प्रीतिः प्रसादोमाधुर्य्यं मार्दवं च यमादश ॥ २ ॥

शौचमिज्या तपोदानं स्वाध्यायोपस्थनिग्रहः ॥
व्रतमौनोपवासं च स्नानं च नियमादश ॥ ३ ॥
यो. याज्ञ. । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्
क्षमा धृतिर्मिताहारः शौचं त्वेते यमादश ॥ ४ ॥
तत्राहिंसा । कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा
अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥ ५ ॥
विध्युक्ता चेदहिंसा स्यात्क्लेशजन्मैव जन्तुषु ॥
चोदिता वेदहिंसा च नाभिचारादि कर्म यत् ॥ ६ ॥
सत्यं । सत्यं भूतहितं प्रोक्तं नाऽयथार्थाभिभाषणम् ।

अस्तेयम् ।

कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहा ॥
अस्तेयमिति संप्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ ७ ॥

ब्रह्मचर्यम् ।

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥
सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते ॥ ८ ॥
ब्रह्मचर्याश्रमस्थानां यतीनां नैष्ठिकस्य च ॥

ब्रह्मचर्यं च यत्प्रोक्तं तथैवारण्यवासिनाम्॥ ९ ॥
ऋतावृतौ स्वदारेषु संगतिर्या विधानतः ॥
ब्रह्मचर्यं तदेवोक्तं गृहस्थाश्रमवासिनम् ॥१०॥
राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यं प्रकीर्त्तितम् ॥
विशां वित्तव्रतां चैव केचिदिच्छन्ति पण्डिताः ११
शुश्रूषैव तु शूद्रस्य ब्रह्मचर्यं प्रकीर्तितम्॥
शुश्रूषया गुरौ नित्यं ब्रह्मचर्यमुदाहृतम् ॥ १२॥
गुरवः।गुरवः पञ्च सर्वेषां चतुर्णां श्रुतिचोदिताः॥
माता पिता तथाचार्योमातुलः श्वशुरस्तथा १३
तेषां मुख्यास्त्रयः प्रोक्ताआचार्यः पितरौ तथा ॥
एषां मुख्यतमस्त्वेक आचार्यः परमार्थवित् १४
तमेव ब्रह्मविच्छ्रेष्ठं नित्यकर्मपरायणम् ॥
शुश्रूषयार्चयेन्नित्यं तुष्टः स्याद्येन वा गुरुः ॥१५॥
दया।दया भूतेषु सर्वेषु सर्वत्रानुग्रहः स्मृतः ॥
आर्जवम् ।
विहितेषु तदन्येषु मनोवाक्कायकर्मणा ॥

प्रवृत्तौ वा निवृत्तौ वा ह्येकरूपत्वमार्जवम् ॥१६॥
क्षमा। प्रियाप्रियेषु सर्वेषु समत्वं यच्छरीरिणाम्
क्षमा सैवेति विद्वद्भिर्गदिता वेदवादिभिः ॥१७॥
धृतिः। अर्थहानौ च बन्धूनां वियोगे चापि सम्पदि
तयोः प्राप्तौ च सर्वत्र चित्तस्य स्थापनं धृतिः १८

मिताहारः।

अष्टौ ग्रासामुनेर्भक्ष्याःषोडशारण्यवासिनाम् ॥
द्वात्रिंशच्च गृहस्थस्याऽनियतं ब्रह्मचारिणाम् ॥
तेषामयं मिताहारस्तत्तेषामल्पभोजनम् ॥ १६ ॥
शौचम्।शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा
मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम् २०
मनःशुद्धिश्च विज्ञेया धर्मेणाध्यात्मविद्यया ॥
आत्मविद्या च धर्मश्च पित्राचार्येण चानघे ॥२१॥
तस्मात्सर्वेषु कालेषु सर्वैः निःश्रेयसार्थिभिः ॥
गुरवः श्रुतसम्पन्ना मान्यावाङ्मनसादिभिः २२
नियमाः।तपःसन्तोषमास्तिक्यं दानमीश्वरपूजनम्

सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपोव्रतम् ॥
एते च नियमाः प्रोक्तास्तांश्च सर्वान् पृथक् शृणु २३
तपः। विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः
शरीरशोषणं प्राहुस्तपसां तपउत्तमम् ॥ २४ ॥
सन्तोषः। यदृच्छालाभतोनित्यं मनः पूतोभवेदतः॥
याधीस्तामृषयः प्राहुः सन्तोषं सुखलक्षणम् २५

आस्तिक्यम् ।

धर्माधर्मेषु विश्वासोयस्तदास्तिक्यमुच्यते ॥
दानम्। न्यायार्जितधनं चैव ह्यर्थिभ्योयत्प्रदीयते॥
अर्थिभ्यः श्रद्धया मुक्तं दानमेतदुदाहृतम्॥ २६॥

ईश्वरपूजनम् ।

यत्प्रसन्नस्वभावेन विष्णुं वा रुद्रमेव वा ॥
यथाशक्त्यर्च्चयेद्भक्त्या ह्येतदीश्वरपूजनम्॥ २७॥
रागाद्यपेतं हृदयं वागदुष्टानृतादिभिः ॥
हिंसादिरहितः कायश्चैतदीश्वरपूजनम् ॥ २८॥

सिद्धान्तश्रवणम् ।

सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ॥

द्विजवत्क्षत्रियस्योक्तं सिद्धान्तश्रवणं बुधैः ॥२९॥
विशां च केचिदिच्छन्ति शीलवृत्तवतां सताम् ॥
शूद्राणां च स्त्रियश्चैव स्वधर्मस्तु तपास्विनाम् ॥
सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः॥३०॥
ह्रीः। वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥
तस्मिन्भवति या लज्जा ह्रीस्तु सैव प्रकीर्त्तिता ३१॥
मतिः। विहितेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत्॥
जपः। गुरुणा चोपदिष्टोऽपि वेदबाह्यविवर्जितः ॥
विधिनोक्तेन मार्गेण मन्त्राभ्यासोजपःस्मृतः ३२
अधीत्य वेदं सूक्तं वा पुराणं सेतिहासकम् ॥
एतेष्वभ्यसनं तस्य त्वभ्यासेन जपःस्मृतः॥३३॥
जपश्च द्विविधः प्रोक्तोमानसोवाचिकस्तथा ॥
वाचिकोपांशुरुच्चैश्च द्विविधः परिकीर्तितः॥३४॥
मानसोमनसा ध्यानभेदाद् द्वैविध्यमास्थितः ॥
उच्चैर्ज्जपादुपांशुश्च सहस्रगुणउच्यते ॥३५॥
मानसश्च तथोपांशोः सहस्रगुणउच्यते ॥

मानसाच्च तथा ध्यानं सहस्रगुणमुच्यते ॥ ३६ ॥
उच्चैर्जपश्च सर्वेषां यथोक्तफलदोभवेत् ॥
नीचैः श्रुतोनचेत्सोऽपि श्रुतश्चेदफलोभवेत्॥ ३७॥
ऋषिच्छन्दोऽधिदैवं च ध्यायन्मन्त्रं च सत्तमम् ॥
यस्तु मन्त्रं जपेद् गार्गि तस्यैव हि फलप्रदः॥ ३८॥
प्रसन्नगुरुणा पूर्वमुपदिष्टस्त्वनुज्ञया ॥
धर्मार्थकामासिद्ध्यर्थमुपायग्रहणं ततः॥ ३९॥ इति.

अथ गृहस्थधर्मानाह ॥ दक्षसंहितायाम् ।

सुधा नव गृहस्थस्य ईषद्दानानि वै नव ॥
नवकर्माणि च तथा विकर्माणि नवैव तु ॥ १ ॥
प्रच्छन्नानि नवान्यानि प्रकाश्यानि पुनर्नव॥
सफलानि नवान्यानि निष्फलानि तथा नव॥ २॥
अदेयानि नवान्यानि वस्तुजातानि सर्वदा ॥
नवकानव निर्दिष्टा गृहस्थोन्नतिकारकाः ॥ ३॥
सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते ॥
मनश्चक्षुर्मुखं वाचं सौम्यं दत्वा चतुष्टयम् ॥ ४॥

अभ्युत्थानमिहागच्छ पृच्छालापः प्रियान्वितः ॥
उपासनमनुव्रज्या कार्याण्येतानि नित्यशः ॥५॥
ईषद्दानानि चान्यानि भूमिरापस्तृणानि च ॥
पादशौचं तथाभ्यंगआश्रयः शयनानि च ॥६॥
किञ्चिद्दद्याद्यथाशक्ति नास्यनश्नन्गृहे वसेत् ॥
मृज्जलं चार्थिने देयमेतान्यपि सदा गृहे ॥७॥
सन्ध्या स्नानं जपोहोमः स्वाध्यायोदेवतार्चनम् ॥
वैश्वदेवं क्षमातिथ्यमुद्धृतं चापि शक्तितः ॥८॥
पितृदेवमनुष्याणां दीनानाथतपस्विनाम् ॥
गुरुमातृपितॄणां च संविभागोयथार्हतः ॥ ९ ॥
एतानि नव कर्माणि विकर्माणि तथा पुनः ॥
अनृतं पारदार्यं च तथाऽभक्ष्यस्य भक्षणम् ॥१०॥
अगम्यागमनापेयपान स्तेयं च हिंसनम् ॥
अश्रौतकर्माचरणं मैत्रधर्मवहिष्कृतम् ॥११॥
नवैतानि विकर्माणि तानि सर्वाणि वर्जयेत् ॥
पैशुन्यमनृतं माया कामः क्रोधस्तथाऽप्रियम् १२

द्वेषोदम्भः परद्रोहः प्रच्छन्नानि तथा नव ॥
आयुर्वित्तं गृहच्छिद्रं मन्त्रोमैथुनभेषजे ॥१३
तपोदानापमानौ च नव गोप्यानि सर्वदा ॥
प्रायोग्यमृणशुद्धिश्च दानाध्ययनविक्रयाः॥ १४॥
कन्यादानं वृषोत्सर्गोरहः पापमकुत्सनम् ॥
प्रकाश्यानि नवैतानि गृहस्थाश्रमिणोस्तथा १५
मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ॥
दीनानाथविशिष्टेषु दत्तं तं सफलं भवेत् ॥१६॥
धूर्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे ॥
चाटुचारणचोरेभ्योदत्तं भवति निष्फलम् ॥१७॥
सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ॥
अन्वाहितं च निःक्षेपं सर्वस्वं चान्वये सति॥
आपत्स्वपि न देयानि नव वस्तूनि सर्वदा ॥१८॥

१ मीठा वाले । २ धरोहर । ३ कोश । ४ विवाहमें प्रथम कन्यादान ।

योददाति समूर्खस्तु प्रायश्चित्तेन युज्यते ॥
नव नवकवेत्तारमनुष्ठानपरं नरम् ॥
इह लोके परत्रापि नीतिस्तं नैव मुञ्चति ॥ १६॥

अथसंस्कारानाह ॥ लघुव्याससंहितायाम् ।

गर्भाधानं पुंसवनं सीमन्तोजातकर्म च ॥
नामक्रिया निष्क्रमणेऽन्नाशनं वपनक्रिया ॥ १॥
कर्णवेधोव्रतादेशोवेदारम्भक्रियाविधिः ॥
केशांतः स्नानमुद्वाहोविवाहाग्निपरिग्रहः ॥ २ ॥
त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः॥

संस्कारभास्करे ।

गर्भाधानमतश्च पुंसवनकं सीमन्तजाताभिधे,
नामाख्यं सह निष्क्रमेणच तथाऽन्नप्राशनं कर्म च॥
चूडाख्यं व्रतबन्धकोप्यथ चतु र्वेदव्रतानां पुरः,
केशान्तःसावसर्गकःपरिणयःस्यात्षोडशीकर्मणाम्

लघुव्याससंहितायाम् ।

नवैताः कर्णवेधान्तामन्त्रवर्जं क्रियाः स्त्रियाः॥४॥
विवाहोमन्त्रतस्तस्याः शूद्रस्यामन्त्रतोदश ॥

गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः ॥ ५ ॥
सीमन्तश्चाष्टमे मासि जाते जातक्रिया भवेत् ॥
एकादशेऽह्निनामार्कस्येक्षामासि चतुर्थके ॥ ६ ॥
षष्ठ मास्यन्नमश्नीयाच्चूडाकर्म कुलोचितम् ॥
कृतचूडे च बाले च कर्णवेधोविधीयते ॥ ७ ॥
विप्रोगर्भाष्टमे वर्षे क्षत्रएकादशे तथा ॥
द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति ॥ ८ ॥
तस्य प्रासवतस्यायं कालः स्याद् द्विगुणाधिकः ॥
वेदव्रतच्युतोव्रात्यः सव्रात्यस्तोममर्हति ॥ ९ ॥
मनुः।वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥१०॥
गार्भैर्होमैर्जातकर्म चौलमौंजीनिबन्धनैः ॥
वैजिकं गार्भिकं चैनोद्विजानामपमृज्यते॥ ११॥
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः॥
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥ १२॥
प्राङ्नाभिवर्धनात्पुंसोजातकर्म विधीयते॥

मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्॥१३॥
नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ॥
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥१४॥
मंगल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ॥
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥ १५॥
शर्मवद्ब्राह्मणस्य स्याद्राज्ञोरक्षासमन्वितम्॥
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥ १६॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ॥
मंगल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥१७॥
चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ॥
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मंगलं कुले ॥१८॥
चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ॥
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥ १९॥
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ॥
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥२०॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ॥

राज्ञोबलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥२१॥
आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ॥
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥२२॥
अतऊर्ध्वं त्रयोऽप्येते यथा कालमसंस्कृताः॥
सावित्रीं पतिता व्रात्या भवन्त्यार्यविगर्हिताः२३
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ॥
ब्राह्मान्यौनांश्च संबन्धान्नाचरेद्ब्राह्मणः सह॥२४॥
वृ.पा.।आधानतोद्वितीये तु मासि पुंसवनं भवेत् ॥
सीमन्तोन्नयनं षष्ठे कार्यं मासेष्टमेपि वा ॥२५॥
जातस्य जातकर्मस्याद्विधिवच्छ्राद्धपूर्वकम् ॥
दिने चैकादशे नाम शर्मादिद्विजजन्मनाम्॥२६॥
तुर्ये निष्क्रमणं मासि षष्ठेन्नप्राशनं स्मृतम् ॥
चूडाकर्म तृतीयेब्दे कार्यं वा कुलधर्मतः ॥ २७॥
स्त्रीणां सर्वं विमन्त्रं स्यात्कार्यं कायविशुद्धये ॥
यस्य न स्युर्द्विजस्यैताः क्रियायदि कथंचन ॥
सर्वान्यः सर्वथा त्याज्योद्विजोयस्माद् द्विजन्मनः

अष्टरुद्रार्कवर्षाणि सगर्भाणि द्विजन्मनाम् ॥
मुख्यकालोव्रतस्यायमन्यउक्तोविपर्यये ॥२६॥
द्विगुणाब्दे तु कर्तव्या क्रमादुपनतिर्द्विजे ॥
हीनगायत्रिका व्रात्या उक्तकालादनन्तरम् ३०
नाध्याप्यानैव चोद्वाह्याव्यवहारविवर्जिताः॥
न याज्यानार्यकार्येषु प्रयोज्यास्ते इति श्रुतिः ३१

अथगृह्यसूत्रे ।

अथ पुंसवनम् ॥ १ ॥ पुरास्यंदतइति मासे द्वितीये तृतीये वा ॥ २ ॥ अथ सीमन्तोन्नयनम् ॥ १ ॥ पुंसवनवत् ॥ २ ॥ प्रथमगर्भे मासे षष्ठेऽष्टमे वा दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति ॥ १ ॥ द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् ॥ २ ॥ अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम् ॥ ३ ॥ शर्मब्राह्मणस्य वर्मक्षत्रियस्य गुप्तेति वैश्यस्य ॥ ४ ॥ चतुर्थे मासि निष्क्रमणिका ॥ ५ ॥ सूर्यमुदीक्षयति तच्चक्षुरिति ॥ ६ ॥

षष्ठे मासेऽन्नप्राशनम् ॥ १ ॥ सांवत्सरिकस्य चूडाकरणम् ॥ १ ॥ तृतीये वाप्रतिहते ॥ २ ॥ षोडश वर्षस्य केशान्तः॥ ३ ॥ यथा मंगलं वा सर्वेषाम् ॥ ४ ॥ अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वा ॥ १ ॥ एकादश वर्षं राजन्यम् ॥ २ ॥ द्वादशवर्षं वैश्यम् ॥ ३ ॥ यथा मंगलं वा सर्वेषाम् ॥ ४ ॥ ब्राह्मणान्भोजयेत्तं च पर्युप्तशिरसमलङ्कृतमानयन्ति ॥५॥ आषोडशाद्वर्षाद्ब्राह्मणस्यानतीतः कालोभवति ॥ ३६ ॥ आद्वाविंशाद्राजन्यस्य ॥ ३७ ॥ आचतुर्विंशाद्वैश्यस्य ॥ ३८॥ अतऊर्ध्वं पतितसावित्रिकाभवन्ति ॥ ३९॥ नैनानुपनयेयुर्न्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः ॥ ४० ॥ कालातिक्रमे नियतवत् ॥ ४१ ॥ त्रिपुरुषं पतितसावित्रिकाणामपत्ये संस्कारोनाध्यापनं च ४२ तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन्व्यवहार्याभवन्तीति वचनात् ॥ ४३ ॥

आपस्तंबोपि ।

अथ काम्यानि सप्तमे ब्रह्मवर्चसकामं अष्टमे आयुष्कामं नवमे तेजस्कामं दशमे अन्नाद्यकामं एकादशे इन्द्रियकामं द्वादशे पशुकाममुपनयेत् ॥ तथा वसन्तेब्राह्मणमुपनयीत ग्रीष्मे राज्यं शरदि वैश्यं गर्भाष्टमे वर्षे वसन्ते ब्राह्मणआत्मानमुपनाययेत् एकादशे क्षत्रियोग्रीष्मे द्वादशे वैश्योवर्षासु वर्षाशब्देन शरदेवाभिधीयते ॥ ऋतुः संवत्सरोग्रीष्मोवर्षाहेमन्तः ॥ इति यास्कवचनात् वर्षास्वन्तर्भवति शरत् ॥ इत्योम् ॥

अथ यज्ञोपवीतं तन्निर्माणप्रकारश्च तद्धारणसंख्यादिविचारः ॥ मनुः ।

कार्पाससुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ॥

तन्निर्माणप्रकारः॥धर्मसिन्धौ॥ब्राह्मणेन ब्राह्मणस्त्रीभिर्विधवादिभिश्च निर्मितं सूत्रं ग्राह्यम् ॥

निर्णयसिन्धौ ॥ पारिजाते देवलः ।

शुचौ देशे शुचिः सूत्रं संहतांगुलिमूलके ॥

आवर्त्य षण्णवत्या तत् त्रिगुणं कर्त्य यत्नतः॥ १॥
अ-ि्लङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं त्रिवृत्॥
अप्रदक्षिणमावृत्य सावित्र्या त्रिगुणाकृतम् ॥ २॥
ततः प्रदक्षिणावर्तं समं स्यान्नव सूत्रकम् ॥
त्रिरावेष्ट्य दृढं बध्वा ब्रह्मविष्णवीश्वरान्नमेत्॥ ३॥

तन्नवतं तु कार्यम् ॥

सावित्र्या त्रिगुणं कुर्यान्नव सूत्रं तु तद्भवेत्॥
इति तेनैवोक्तेः ।
कात्या-स्मृ.।त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम्॥
त्रिवृतं चोपवीतं स्यात्तस्यैकोग्रन्थिरिष्यते ॥ ४॥
पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ॥
तद्धार्यमुपवीतंस्यान्नातोलंबं न चोच्छ्रितम् ॥५॥
निर्णयसिन्धौ ॥ भृगुः।वामावर्तवलितं त्रिगुणं-कृत्वा दाक्षिणावर्तवलितं त्रिगुणं कार्यम्॥ सएक-स्तंतुरेवं त्रितंतुकमित्यर्थः ॥ ६ ॥
वसिष्ठः।नाभेरूर्ध्वमनायुष्यमधोनाभेस्तपः क्षयः॥
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ ७॥

पारिजाते देवलः।

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते ॥
एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः॥८॥
हेमाद्रौ।यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि॥
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ॥ ९ ॥
देवलः।सावित्र्यादशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत्
विच्छिन्नं चाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत्॥

गृह्यसूत्रे हरिहरभाष्ये।

स्तनादूर्ध्वमधोनाभेर्न धार्यं तत्कथं चन ॥
ब्रह्मचारिणएकं स्यात् स्नातस्य द्वे वहूनि वा ११
ब्रह्मसूत्रेऽपसव्येंसे स्थिते यज्ञोपवीतिता ॥
प्राचीनावीतिता सव्ये कण्ठस्थे तु निवीतिता १२

यज्ञोपवीतधारणमन्त्रः। ब्रह्मोपनिषदि।

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्॥
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रंयज्ञोपवीतंबलमस्तुतेजः
वृ.पा.।विना यज्ञोपवीतेन भोजनं कुरुते यदि ॥
अथ मूत्रपुरीषे वा रेतःसेचनमेव वा ॥ १४ ॥

त्रिरात्रोपोषितोविप्रः पादकृच्छ्रं तु भूमिपः ॥
अहोरात्रोषितोवैश्यः शुद्धिरेषा पुरातनी ॥१५॥

निर्णयसिन्धौ ॥ मरीचिः ।

ब्रह्मसूत्रं विना भुंक्ते विण्मूत्रे कुरुतेथवा ॥
गायत्र्यष्टसहस्रेण प्राणायामेन शुद्धयति ॥१६॥

आह्निकसूत्रावलौ संग्रहे ।

विना यज्ञोपवीतेन तोयं यः पिबते द्विजः ॥
उपवासेन चैकेन पञ्चगव्येन शुद्धयति ॥ १७॥
विना यज्ञोपवीतेन विण्मूत्रोत्सर्गकृद्यदि ॥
उपवासद्वयं कृत्वा दानैर्होमैस्तु शुद्धयति १८
उपाकर्मणि चोत्सर्गे गते मासचतुष्टये ॥
नव यज्ञोपवीतानि धृत्वा पूर्वाणि सन्त्यजेत् ॥
जीर्णयज्ञोपवीतानि शिरोमार्गेण सन्त्यजेत् १९
अन्यच्च। सूतके मृतके चैव गते मासचतुष्टये ॥
नव यज्ञोपवीतानि धृत्वा जीर्णानि सन्त्यजेत्॥

धारितयज्ञोपवीते कण्ठादुत्तीर्णेदोषः ।

कठाः काण्वाश्च चरकाविप्रावाजसनेयकाः ॥

वह्वृचः सामगाश्चैव ये चान्ये यजुःशाखिनः ॥
कण्ठादुत्तीर्यं सूत्रं तु पुनः संस्कारमर्हति॥ २१ ॥

यज्ञोपवीततन्तुदेवताः ॥ हरिहरभाष्ये ।

ॐकारः प्रथमे तन्तौ द्वितीयेऽग्निस्तथैव च ॥
तृतीये नागदैवत्यं चतुर्थे सोमदेवता ॥ २२ ॥
पञ्चमे पितृदैवत्यं षष्ठे चैव प्रजापतिः ॥
सप्तमे मारुतश्चैव अष्टमे सूर्य एव च ॥ २३ ॥
सर्वे देवास्तु नवम इत्येतास्तन्तुदेवताः ॥
ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ॥
रुद्रेण दत्तोग्रन्थिश्च सावित्र्या चाभिमन्त्रितम् २४
कृते पद्ममयं सूत्रं त्रेतायां कनकोद्भवम् ॥
द्वापरे रजतं प्रोक्तं कलौ कार्पाससम्भवम् ॥ २५ ॥
ग्रन्थान्तरे। तिथिवारं च नक्षत्रं तत्त्ववेदगुणत्रयम्॥
कालत्रयं च मासं च ब्रह्मसूत्रं च षट् नवम्॥ २६ ॥

धर्मसिन्धौ। चितिकाष्ठचितिधूमचण्डालरजस्व-
लाशवसूतिकास्पर्शे स्नात्वा यज्ञोपवीतत्यागः ॥

समुद्रं गच्छ स्वाहेति मन्त्रेण सप्रणवव्याहृति-
भिर्वा जीर्णयज्ञोपवीतत्यागः ॥ इत्योम् ॥

अथ सदाचारधर्मानाह ॥ ह० पा० ।

आचारः परमोधर्मः सर्वेषामिति निश्चयः॥
हीनाचारश्च पुरुषः प्रेत्य चेह विनश्यति ॥ १ ॥
क्लेशभागी च सततं व्याधितोल्पायुरेव च॥
आचारोव्यवहारश्च दुराचारोविपर्ययः ॥ २ ॥
नृणामाचारतोधर्मः स्यादधर्मोविपर्ययात् ॥
तस्मादाचारंवर्त्तेत व्यत्ययं तु विवर्जयेत् ॥ ३ ॥

आचारवन्तोमनुजालभन्ते, वित्तं तथायुश्च सुतांश्च सौख्यम् ॥ धर्मं तथा शाश्वतमीशलोक-मत्रापि विद्वज्जनपूज्यतां च ॥ ४ ॥

वेदाः सहांगाः सपुराणविद्याः, शास्त्राणि सर्वाणि च तद्विहीनम् ॥ कुर्युः स्वधीतान्यपि न स्फूतानि, नरं पवित्रं मुनयोवदन्ति ॥ ५ ॥

येऽधीतवेदाः क्रियया विहीना, जीवन्ति वेदैर्मनुजाधमांस्तान् ॥ वेदास्त्यजेयुर्मरणस्य काले,

तीडं शकुन्ताइव जातपक्षाः ॥ ६ ॥
सत्ययुक्तं सदा ब्रूयाच्छनैर्धर्मं सदा चरेत् ॥
यमान्संनियमान्कुर्याद्गार्हस्थ्यं व्रतमाचरन् ॥ ७ ॥
मातापितॄनुपाध्यायान् गुरून् वृद्धान्सदार्चयेत् ॥
एतान्वृद्धांस्तथा चान्यान्नित्यं विप्रोभिवादयेत्॥
दमं च सर्वदा कुर्याद्दानं शक्त्या सदैव हि ॥
दयां जन्तुषु कुर्वीत तद्धीनोनरकाश्रयः ॥६॥
सद्द्विजानां च सन्मानं दानंदत्तं सदा जनाः ॥
दयध्वमपि चैवैषा श्रुतिर्वाजसनेयिकी ॥ १० ॥
यत्त्रिदकारकं कुर्यात्स्तनयित्नुध्वनिन्दिवि॥
ददेति दमं दानं दयामिति च शिक्षयेत् ॥ ११ ॥
रसारसैः समाग्राह्या देयाअपि च नान्यथा॥
रसैर्नेलवणं ग्राह्यं समतोहीनतोपि च ॥ १२ ॥
तिलाअपि समादेया धान्यैरन्यैर्द्विजातिभिः ॥
न ते यन्त्रेण निष्पीड्याब्रूयुरेतन्मनीषिणः ॥ १३ ॥
विक्रयं व्यपदेशेन दुग्धदध्यादिसर्पिषाम् ॥

लोभात्कुर्याद् द्विजन्मा यः सतु शूद्रसमस्त्यहात्॥
शुश्रूषां न तिरस्कुर्यादुपास्यान्नावधीरयेत् ॥
न निन्देञ्च समभ्यर्च्यान विक्रीणीत गर्हितान्१५
अदेयानि न वै दद्यादत्याज्यानि न वै त्यजेत् ॥
अभाष्यानैव भाषेत हीनांगाद्यांश्च न क्षिपेत्॥१६
न संवदेञ्च पित्राद्यैः पतिताद्यैर्न संवसेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव वा ॥ १७॥
मतिं शूद्रस्य योदद्यान्नरकं प्रतिपद्यते ॥
न तस्य किञ्चिदाख्येयं व्रतादि नियमादिकम्१८
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं सन्ध्याशय्यार्धरात्रिषु॥१६॥
वेदविद्यादियानानि न विक्रीणीत कर्हिचित् ॥
नापत्यानि न सद्मानि भूवृत्तिं चान्वये सति २०॥
नापः पिवेञ्च पाणिभ्यां न कण्डूप्रतिकृद्भवेत् ॥
विदिक्प्रत्यगुदक्कस्तुशयीताह्नि न सन्ध्ययोः॥२१॥
पादुकादि न पालाशं न वृक्षादिनिकृन्तनम्॥

नोत्सार्यं ष्ठीवनाद्यं तु न कदाचिद्गवादिषु २२॥
पङ्क्त्यां स्पृशद्गवाद्यं नो नोच्छिष्टोन च तद्गतिः॥
न लंघ्या वत्सतंत्राद्या वा स्वर्गोनान्तरागतिः २३
न द्वयोर्विप्रयोर्नाग्न्योः सौरभ्योर्न पतिस्त्रियोः ॥
विप्राग्न्योर्विप्रपिण्डानां नोप्रोक्षणोर्विष्णुतार्क्ष्ययोः
सौरभेय्योर्नलाग्न्योश्च माहेयीजलयोरपि ॥
मानुष्योमादिकानां तु न कुर्यादन्तरागतिम् २५
भोजनादिषु सक्तानां न पश्येद्दिगतांशुकम् ॥
न गच्छेत्स्त्रीजनैर्युक्तअश्नीयान्न तया सह ॥२६
उत्तरीयं विना नैव न नग्नोन शयीत च ॥
न मेहेच्चैव मार्गादौ न निषिद्धककुम्मुखः ॥२७॥
नोपगङ्गामराचादि न विष्ठादिगृहान्तिके ॥
अतिकालादियाने च शुभमिच्छन्विवर्जयेत् २८
ज्येष्ठेन्द्रचापरुद्राद्या मूलनाम्ना न निर्दिशेत् ॥
इन्द्रचापं धयन्तीं गौर्माख्यातव्ये परस्य ते॥२६॥
वर्जयेद्धावनं चैव पादयोः कांस्यभाजने ॥

पैशुन्यं मर्मभेदं च न वदेन्म्लेच्छभाषितम् ॥३०॥
प्राकृतं च कुशास्त्राणि पाखण्डं हैतुकानि च ॥
न श्रोतव्यानि विप्रेण यातनाकारणानि च ३१
न करं मस्तके दद्यान्न करे मस्तकं तथा ॥
न जानुनोः शिरोधार्यं न प्रावृताशिरा भ्रमेत् ३२

महाभारते शान्तिपर्वणि ॥ युधिष्ठिरउवाच ।

आचारस्य विधिं तात प्रोच्यमानं त्वयाऽनघ ॥
श्रोतुमिच्छामि धर्मज्ञ सर्वज्ञोह्यसि मे मतः ॥३३॥

भीष्म उवाच ।

दुराचारा दुर्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः ॥
असन्तास्त्विति विख्याताः सन्तश्चाचारलक्षणाः
पुरीषं यदि वा मूत्रं ये न कुर्वन्ति मानवाः ॥
राजमार्गे गवां मध्ये धान्यमध्ये च ते शुभाः ३५
शौचमावश्यकं कृत्वा देवतानां च तर्पणम् ॥
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत् ॥३६॥
सूर्यं सदोपतिष्ठेत न च सूर्योदये स्वपेत् ॥

सायं प्रातर्जपेत्सन्ध्यां तिष्ठन्पूर्वां तथेतराम् ॥ ३७ ॥
पञ्चार्द्रो भोजनं भुञ्ज्यात्प्राङ्मुखो मौनमास्थितः ॥
न निन्द्यादन्यभक्ष्यांश्च स्वादु स्वादु च भक्षयेत् ३८
आर्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि ॥
देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ॥ ३९ ॥
शुचिं देशमनड्वाहं देवगोष्ठं चतुष्पथम् ॥
ब्राह्मणं धार्मिकं चैत्यं नित्यं कुर्यात्प्रदक्षिणम् ४०
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ॥
सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते ॥ ४१ ॥
सायं प्रातर्मनुष्याणामशनं वेदनिर्मितम् ॥
नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् ॥ ४२ ॥
होमकाले तथा जुह्वन्नृतुकाले तथा व्रजन् ॥
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ४३ ॥
अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम् ॥
तज्जनाः पर्युपासन्ते सत्यं सन्तः समासते ४४
लोष्टमर्दी तृणच्छेदी नखखादी तु यो नरः ॥

नित्योच्छिष्टः शंकुशुक्रोनेहायुर्विन्दते महत् ॥ ४५
यजुषा संस्कृतं मांसं निवृत्तोमांसभक्षणात् ॥
न भक्षयेद् वृथा मांसं पृष्ठमांसं च वर्जयेत् ॥४६॥
स्वदेशे परदेशे वा अतिथिं नोपवासयेत् ॥
काम्यकर्मफलं लब्ध्वा गुरूणामुपपादयेत् ॥ ४७ ॥
गुरुभ्य आसनं देयं कर्तव्यं चाभिवादनम् ॥
गुरूनभ्यर्च्य युज्यन्ते आयुषा यशसाश्रिया ॥ ४८
नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम् ॥
मैथुनं सततं धर्म्यं गुह्ये चैव समाचरेत् ॥४६ ॥
तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ॥
सर्वमार्यकृतं चौक्ष्यं बालसंस्पर्शनानिच ॥ ५० ॥
दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत् ॥
सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् ॥ ५१ ॥
देवागारे गवां मध्ये ब्राह्मणानां क्रियापथे ॥
स्वाध्याये भोजने चैव दाक्षिणं पाणिमुद्धरेत् ५२
सायं प्रातश्च विप्राणां पूजनं च यथाविधि ॥

पण्यानां शोभते पण्यं कृषीणां वाद्यते कृषिः॥
वहुकारं च सस्यानां वाह्ये वाहोगवां तथा ५३
सम्पन्नं भोजने नित्यं पानीये तर्पणं तथा ॥
सुशृतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा ॥ ५४ ॥
श्मश्रुकर्माणि संप्राप्ते क्षुते स्नानेऽथ भोजने॥
व्याधितानांच सर्वेषामायुष्यमभिनन्दनम् ॥५५॥
प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्॥
सहस्त्रियाऽथ शयनं सहभोज्यं च वर्जयेत् ॥ ५६॥
त्वंकारं नामधेयं च ज्येष्ठानांपरिवर्जयेत् ॥
अवराणां समानानामुभयेषां न दुष्यति ॥५७ ॥
हृदयं पापवृत्तानां पापमाख्याति वैकृतम् ॥
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ ५८ ॥
ज्ञानपूर्वंकृतं पापं छादयत्यवहुश्रुतः ॥
नैनं मनुष्याः पश्यन्ति पश्यन्त्येव दिवौकसः ५६
पापेनापि हितं पापं पापमेवानुवर्जयेत् ॥
धर्मेणापि हितोधर्मोधर्ममेवानुवर्तते ॥

धार्मिकेण कृतोधर्मोधर्ममेवानुवर्तते ॥ ६० ॥

पापं कृतं न स्मरतीह मूढो, विवर्तमानस्य त-
देति कर्त्तुः॥राहुर्यथा चन्द्रमुपैति चापि,तथाऽबुधं
पापमुपैति कर्म ॥ ६१ ॥

आशया संचितं द्रव्यं दुःखेनैवोपभुज्यते॥
तद्बुधान प्रशंसन्ति मरणं न प्रतीक्षते ॥ ६२॥

मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ॥
तस्मात्सर्वेषु भूतेषु मनसा शिवमाचरेत् ॥ ६३॥

एकएव चरेद्धर्मं नास्ति धर्मे सहायता ॥
केवलं विधिमासाद्य सहायः किं करिष्यति॥६४॥

धर्मोयोनिर्मनुष्याणां देवानाममृतंदिवि ॥
प्रेत्य भावे सुखं धर्माच्छश्वत्तैरुपभुज्यते ॥ ६५ ॥

आत्रिस्मृतौ ।

दिवा कपित्थछायायां रात्रौ दाधिशमीषु च ॥
कार्पासं दन्तकाष्ठं च विष्णोरपि श्रियं हरेत् ६६

शूर्पवातोनखाग्राम्बु स्नानवस्त्रं घटोदकम् ॥

मार्जनीरजः केशाम्बु देवतायतनोद्भवम् ॥
तेनावगुण्ठितं तेषु गङ्गाम्भःप्लुतएव सः ॥६७॥
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवा कृतम् ॥
दीपशय्यासनच्छाया कार्पासंदन्तधावनम् ॥
अजारेणुस्पृशं चैव शक्रस्यापि श्रियं हरेत् ॥६८॥
आपस्तं-न यमं यममित्याहुरात्मा वै यमउच्यते ॥
आत्मा संयमितोयेन तं यमः किं करिष्यति ६९
अपमानात्तपोवृद्धिः सन्मानात्तपसःक्षयः ॥
आर्चितः पूजितोविप्रोदुग्धा गौरिव सीदति ७०
मातृवत्परदारांश्च परद्रव्याणि लोष्ठवत् ॥
आत्मवत्सर्वभूतानि यः पश्यति सपश्यति ॥७१॥
संवर्त्तः।न वै शयीत तमसा न यज्ञेनानृतं वदेत् ॥
अपवदेन्न विप्रस्य न दानं परिकीर्तयेत् ॥७२॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ॥
आयुर्विप्रापवादेन दानं च परिकीर्त्तनात् ॥७३॥
चत्वार्येतानि कर्माणि सन्ध्यायां वर्जयेद्बुधः ॥

आहारं मैथुनं निद्रां तथा संपाठमेवच ॥ ७४ ॥
आहाराज्जायते व्याधिर्गर्भोवै रौद्रमैथुनात् ॥
निद्रातोजायतेऽलक्ष्मीः संपाठादायुषःक्षयः॥७५॥
मनुः । नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन॥
नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम् ॥७६॥
न लङ्घयेद्वत्सतन्त्रीं न प्रधावेच्च वर्षति ॥
न चोदके निरीक्षेत स्वं रूपमिति धारणा॥ ७७॥
मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ॥
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्॥ ७८॥
नोपगच्छेत् प्रमत्तोपि स्त्रियमार्तवदर्शने ॥
समानशयने चैव न शयीत तया सह ॥ ७९ ॥
रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः ॥
प्रज्ञा तेजोबलं चक्षुरायुश्चैव प्रहीयते ॥८०॥
तां विवर्जयतस्तस्य रजसा समभिप्लुताम्॥
प्रज्ञातेजोबलं चक्षुरायुश्चैव प्रवर्धते ॥ ८१ ॥
नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् ॥

क्षुवतीं जृम्भमाणां वा न चासीनां यथा सुखम् ८२
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम्॥
न पश्येत्प्रस्रवन्तीं च तेजस्कामो द्विजोत्तमः ॥८३
नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ॥
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥८४॥
अधस्तान्नोपदध्याच्च न चैनमभिलंघयेत् ॥
न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत्॥८५॥
नाश्नीयात्सन्धिबेलायां न गच्छेन्नापि संविशेत्॥
न चैव प्रलिखेद्भूमिं नात्मनोपहरेत्स्रजम् ॥ ८६॥
नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत् ॥
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ८७
नैकःस्वपेच्छून्यगेहे शयानं न प्रबोधयेत् ॥
नोदक्ययाभिभाषेत यज्ञं गच्छेन्न चावृतः ॥ ८८
न वारयेद् गां धयन्तीं न चाचक्षीत कस्य चित् ॥
न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः ॥८९॥
नाधार्मिके वसेद्ग्रामे न व्याधिबहुले भृशम् ॥

नैकः प्रपद्येताध्वानं न चिरं पर्वतेवसेत् ॥ ६१ ॥
न शूद्रराजे निवसेन्नाधार्मिकजनावृते ॥
न पाषण्डिगणाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः॥६१॥
न नृत्येदथ वा गायेन्न वादित्राणि वादयेत् ॥
नास्फोटयेन्न चक्ष्वेडेन्न च रक्तो विरावयेत् ॥६२॥
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ॥
उपवीतमलङ्कारं स्रजं करकमेव च ॥ ६३ ॥
बालातपः प्रेतधूमोवर्ज्यं भिन्नं तथासनम् ॥
नच्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान्॥
न मृल्लोष्टं च मृद्नीयान्नच्छिन्द्यात्करजैस्तृणम् ॥
न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम्॥६५॥
लोष्टमर्दी तृणच्छेदी नखखादी च योनरः ॥
सविनाशं व्रजत्याशु सूचकोऽशुचिरेव च॥६६॥
न विगर्ह्यकथां कुर्याद्बहिर्माल्यं न धारयेत्॥
गवां च यानं पृष्ठेन सर्वथैव विगर्हितम् ॥६७॥
अद्वारेण च नातीयाद् ग्रामं वा वेश्म वा वृतम् ॥

रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ॥९८॥
नाक्षैः क्रीडेत्कदाचित्तु स्वयं नोपानहौ हरेत् ॥
न विण्मूत्रमुदीक्षेत न बाहुभ्यां नदीं तरेत्॥९९॥
अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः ॥
न कार्पासास्थि न तुषान्दीर्घमायुर्जिजीविषुः१००
न संवसेच्च पतितैर्न चाण्डालैर्न पुक्कसैः ॥
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः॥१॥

गौतमः । नाग्निमपश्चयुगपद्धारयेत् ॥ न मिथुनी भूत्वा शौचं प्रति विलम्बेत् ॥ न सन्दिग्धां नावमधिरोहेत सर्वतएव आत्मानं गोपायेत् ॥ न पदासनमाकर्षेत् ॥ न यज्ञमवृतोगच्छेत्॥दर्शनाय तु कामम् ॥ यच्चात्मवन्तोवृद्धाः सम्यग्विनीतादम्भलोभमोहवियुक्तावेदविदआचक्षते तत्समाचरेत् ॥

वसिष्ठः । न जलेन जलं नेष्टकाभिः फलानि पातयेत न फलेन फलं न कल्कपुटकोभवेत् ॥

न म्लेच्छभाषां शिक्षेत् ॥
न पाणिपादचपलोन नेत्रचपलो भवेत् ॥
न चांगचपलोविप्रइति शिष्टस्य गोचरः ॥ २ ॥
पारंपर्यागतोयेषां वेदः सपरिबृंहणः ॥
ते शिष्टाब्राह्मणाज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ ३ ॥
यन्न सन्तं न चासन्तं नाश्रुतं न वहुश्रुतम् ॥
न सुवृत्तं नदुर्वृत्तं वेद कश्चित्सब्राह्मणः ॥ ४ ॥

अभिवादनम् ॥ गौतमः । सोपानत्कश्चाशनासनशयनाभिवादननमस्कारान् वर्जयेत् ॥

अंगिराः ।

अप्रणामं मते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः ॥
शूद्रोपि नरकं याति ब्राह्मणोपि तथैव च ॥ ५ ॥
अत्रिः ।हीनवर्णे च यः कुर्यादज्ञानादभिवादनम् ।
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्धयति ॥ ६ ॥

हरिहरभाष्ये ।

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भपातिनीम् ॥
पाषण्डं पतितं व्रात्यं महापातकिनं शवम् ॥ ७ ॥

नास्तिकं कितवं स्तेनं कृतघ्नं नाभिवादयेत् ॥
मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् ॥ ८ ॥
वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ॥
अभ्यक्तं शिरसि स्नानं कुर्वन्तं नाभिवादयेत् ९

शातातपः बृहस्पतिस्तु ।

जपयज्ञजलस्थं च समित्पुष्पकुशान् तिलान् ॥
उदपात्रार्घ्यभैक्षान्नं वहन्तं नाभिवादयेत ॥
अभिवाद्य द्विजश्चैतानहोरात्रेण शुध्यति ॥१०॥

क्षत्रवैश्याभिवादने विप्रस्यैवं शूद्राभिवादने त्रिरात्रं कार्यं तु रजकादिषु चाण्डालादिषु चान्द्रं स्यादिति संग्रहकृत्स्मृतम् ॥ ११ ॥

जमदग्निः देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम्
नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति ॥ १२ ॥

अत्र गुरवो माता स्तन्यदात्री च पितापितामहयोः मातामहश्चान्नदाता भयत्राताऽऽचार्यश्चोपनेता च मन्त्रविद्योपदेष्टा तेषां पत्न्यश्चोपसं-

ग्राह्याः समावृत्तेन बाले समवयस्के वाऽध्यापके गुरुवच्चरेत् ॥ मातुलाश्च पितृव्याश्च श्वशुराश्च यवीयसोपि प्रत्युत्थायाभिवाद्याः उपाध्याया-ऋत्विजोज्येष्ठभ्रातरश्च सर्वेषां पत्न्यश्चैवं मातृष्व-सा सवर्णा भ्रातृभार्या च नित्यमभिवाद्याः ॥

परपत्नीमसंबन्धां भगिनीं चेति भाषयेत् ॥१३

मनुः। शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥१४॥

ऊर्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविरआयति ॥
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते॥१५॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ॥
चत्वारि तस्य वर्द्धन्ते आयुर्विद्या यशोबलम् १६

अभिवादात्परं विप्रोज्यायांसमभिवादयन् ॥
असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत् १७

नामधेयस्य ये केचिदभिवादं न जानते ॥
तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्वास्तथैवच १८

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ॥
नाम्नां स्वरूपभावोहि भोभाव ऋषिभिः स्मृतः १९
आयुष्मान् भव सौम्येति वाच्योविप्रोऽभिवादने॥
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः
योन वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ॥
नाभिवाद्यः सविदुषा यथा शूद्रस्तथैव सः ॥२१॥
ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ॥
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ २२॥
अवाच्योदीक्षितोनाम्ना यवीयानपि योभवेत्॥
भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥ २३ ॥
परपत्नी तु या स्त्री स्यादसंबन्धा च योनितः॥
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च २४ ॥
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजोगुरून् ॥
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः॥२५॥
मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा ॥
संपूज्या गुरुपत्नीवत्समास्ता गुरुभार्यया ॥२६॥

भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि ॥
विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः॥२७॥
पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ॥
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्योगरीयसी॥२८॥
ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् ॥
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता२९

आ० सू० होलिर्भाष्ये ।

यस्यदेशोन विज्ञातोनाम गोत्रं त्रिपूरुषम् ॥
कन्यादाने पितृश्राद्धे नमस्कारे च वर्जयेत्॥३०॥
उक्तंच। दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम् ॥
स्नातं मूढं चाशुचिकं नमस्कारांस्तु वर्जयेत् ३१
सभायां यज्ञशालायां देवतायतनेषु च ॥
प्रत्येकं तु नमस्कारोहन्ति पुण्यं पुरा कृतम्॥३२॥

आह्निककारिकासु ।

समित्पुष्पकुशान्यम्बुमृत्तिकाक्षतपाणिनः ॥
जपं होमं च कुर्वाणानाभिवाद्यास्तथा द्विजाः३३
योगिनं च तपःसक्तं ध्यानस्थं नाभिवादयेत् ॥

धावन्तं च प्रमत्तं वा मूत्रोच्चारकरं तथा ॥ ३४ ॥

अथ शुद्धिविचारः ॥ जनने मरणे शुद्धिविचारः ।

मनुः। दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ॥
अशुद्धाबान्धवाः सर्वे सूतके च तथोच्यते ॥ १ ॥
दशाहं शावमाशौचं सपिण्डेषु विधीयते ॥
अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव च ॥ २ ॥
वृ.पा.। सवेदःसाग्निरेकाहाद्ब्राह्मणः शुद्धिमाप्नुयात् ॥
विद्याननग्निकोविप्रस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ ३ ॥
शंखः। नामधारकविप्रस्तु दशाहेन विशुध्यति ॥
मनुः । सपिण्डता तु पुरुषे सप्तमेविनिवर्त्तते ॥
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ ४ ॥
यथेदं शावमाशौचं सपिण्डेषु विधीयते ॥
जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम् ॥ ५ ॥
शुद्ध्येद्विप्रोदशाहेन द्वादशाहेन भूमिपः ॥
वैश्यः पञ्चदशाहेन शूद्रोमासेन शुध्यति ॥ ६ ॥
सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ॥

सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः॥ ७॥
वृ·पा·।प्रसवे च द्विजातीनां न कुर्यात्सङ्करं यदि॥
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः॥८॥
धर्मसि·। पित्रादिसपिण्डानां जननाशौचे कर्मानधिकारमात्रं कर्माद्यतिरिक्तकाले स्पर्शदोषोन
मनुः।रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति॥
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला॥ ९॥
ल·पा·।आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः॥
अतऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्॥ १०॥
मनुः। नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता॥
निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते॥ ११॥
याज्ञ·।आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता॥
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्॥ १२॥
अत्रिः।सपिण्डानां तु सर्वेषां गोत्रजः सप्तपौरुषः॥
पिण्डांश्चोदकदानं च शावशौचं तथानुगम्॥ १३॥
चतुर्थे दशरात्रं स्यात्षडहः पञ्चमे तथा॥

षष्ठे चैव त्रिरात्रं स्यात्सप्तमे त्र्यहमेव वा ॥ १४ ॥
मनुः। ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ॥
अलंकृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥ १५ ॥
नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया ॥
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च ॥ १६ ॥
नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ॥
जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति १७

दन्तजन्म सप्तमे मासि इत्युपनिषदि नियतकालत्वात्॥ नि० धर्म०। दन्तजननं सप्तममासोपलक्षणम् ॥

वृ.पा.। अजातदन्ता ये बाला ये च गर्भाद्विनिर्गताः॥
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया॥ १८॥
लघु.पा. दन्तजाता ह्यजाताश्च कृतचूडाश्च संस्थिताः
अग्निसंस्करणं तेषां त्रिरात्रमशुचिर्भवेत् ॥ १९ ॥
अत्रिः। कृतचूडे प्रकुर्वीत उदकं पिण्डमेव च ॥
स्वधाकारं प्रकुर्वीत नामोच्चारणमेव च॥ २० ॥

शंखोपि। अजातदन्तबाले तु सद्यःशौचं विधीयते॥
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके॥
तथैवानुपनीते तु त्र्यहाच्छुध्यन्तिबान्धवाः॥२१॥
मनुः।सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्॥
जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते २२
स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्तिबान्धवाः॥
यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः॥२३॥
याज्ञव।अहस्त्वदत्तकन्यासु बालेषु च विशोधनम्
गुर्वन्ते वास्य नूचानमातुलश्रोत्रियेषु च॥ २४॥
मनुः।विगतं तु विदेशस्थं शृणु याद्योह्यनिर्दशम्॥
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥ २५॥
अतिक्रान्ते दशाहे च त्रिरात्रमशुचिर्भवेत्॥
संवत्सरे व्यतीते तु स्पृष्ट्वैवापोविशुध्यति॥ २६॥
निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च॥
सवासाजलमाप्लुत्य शुद्धोभवति मानवः॥२७॥
बाले देशान्तरस्थे च पृथक् पिण्डे च संस्थिते॥

सवासाजलमाप्लुत्य सद्यएव विशुध्यति ॥ २८ ॥
अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनोः ॥
तावत्स्यादशुचिर्विप्रोयावत्तत्स्यादनिर्दशम्॥ २९॥
बृ.पा.।सूतके सत्यशौचे वा अन्यदापद्यते यदि ॥
पूर्वेणैव तु शुध्येत जाते जातं मृते मृतम्॥ ३०॥
शंखः।समानं खल्वशौचं तु प्रथमेन समापयेत् ॥
आसमानं द्वितीयेन धर्मराजवचोयथा ॥ ३१ ॥
लिखितः।शावसूतकउत्पन्ने सूतकं तु यदा भवेत्॥
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी॥ ३२॥
दक्षोपि।सूतके मृतके चैव तथा च मृतसूतके ॥
एतत्संहतशौचानां मृताशौचेन शुध्यति ॥ ३३ ॥
मनुः।त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ॥
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः॥
श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् ॥
मातुले पक्षिणीरात्रिं शिष्यर्त्विग्बान्धवेषु च ३५
ते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः॥

अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ॥३६॥
वृथा सङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ॥
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया॥३७॥
पाषण्डमाश्रितानां च चरन्तीनां च कामतः॥
गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम् ॥३८॥
आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ॥
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥३९॥
दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ॥
पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः ॥४०॥
न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम्॥
ऐन्द्रं स्थानमुपासीना ब्रह्मभूताहि ते सदा ॥४१॥
राज्ञोमाहात्मिके स्थाने सद्यः शौचं विधीयते ॥
प्रजानां परिरक्षार्थमासनं चात्र कारणम् ॥४२॥
शंखोपि। यतिव्रतिब्रह्मचारिनृपकारुकदीक्षिताः ॥
नाशौचभाजः कथिताराजाज्ञाकारिणश्च ये ४३
वृ.पा.। विष्णुध्यानरतानां च सदैव व्रतचारिणाम्॥

गृहमेधिद्विजातीनां तथैव व्रतचारिणाम् ॥४४॥
वेदतत्त्वार्थवेत्तॄणां नित्यस्नानकृतामपि ॥
अनुसंसर्गिणामेषां नाशौचं नापि सूतकम्॥४५॥
संसर्गं वर्जयेद्यस्मात्संसर्गोदोषकारणम् ॥
कुर्यान्नान्नादिसंसर्गं वर्जयन्स्यादकिल्बिषी ४६॥
वदन्ति मुनयः प्राच्याः संसर्गोदोषकारणम् ॥
असंसर्गः स्वकर्मस्थोद्विजोदोषैर्न लिप्यते ॥४७॥
लघु.पा.।यदिपत्न्यां प्रसूतायां संपर्कं कुरुते द्विजः॥
सूतकं तु भवेत्तस्य यदि विप्रश्च वेदवित् ॥४८॥
संपर्काज्जायते दोषोनान्योदोषोस्ति वै द्विजे ॥
तस्मात्सर्वप्रयत्नेन संपर्कं वर्जयेद्बुधः ॥ ४९ ॥
वृ.पा.।दानोद्वाहेष्टिसंग्रामे देशविप्लवकादिषु ॥
सद्यः शौचं द्विजातीनां सूतकाशौचयोरपि ५०॥
दातॄणां व्रतिनामेके कवयः सत्रिणामपि ॥
सद्यः शौचमदोषाणामूचुर्धर्मविदः कलौ ॥५१॥
सर्वमन्त्रपवित्रः स्यादग्निहोत्री षडंगवित् ॥

राजा च श्रोत्रियश्चैव सद्यःशौचाः प्रकीर्तिताः ५२
देशान्तरगते जाते मृते वापि सगोत्रिणि ॥
सत्यप्येकनिवासे तु सद्यः शौचं विशोधनम् ॥५३॥
नाशौचसूतके स्यातां नृपतीनां कदाचन ॥
यज्ञकर्मप्रवृत्तस्य ऋत्विजोदीक्षितस्य च ॥ ५४ ॥
दुर्भिक्षे राष्ट्रभंगे च विपत्कालउपस्थिते ॥
उपसर्गमृते चापि सद्यः शौचं विधीयते ॥५५॥
गोद्विजार्थे विपन्नानामाहवेषु गतायुषाम् ॥
ते योगिभिः समाज्ञेयाः सद्यः शौचाः प्रकीर्तिताः
संन्यासी संस्थितोयोगी सम्मुखे योरणे हतः ॥
सूर्यमण्डलभेत्तारावेति प्राहुर्मनीषिणः ॥ ५७ ॥
भृगुवह्निप्रपाते च देशान्तरमृतेषु च ॥
बाले प्रेते च संन्यासे सद्यः शौचं विधीयते॥५८॥
शिल्पिनः कारुकाश्चैव दासीदासास्तथैव च ॥
इत्यादीनां न ते स्यातामनुगृह्णन्ति यान्द्विजाः ५९
अनाथब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ॥

पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥ ६० ॥
अशुचित्वं न तेषां तु पापं वा शुभकारिणाम् ॥
जलावगाहनात्तेषां सद्यः शुद्धिः प्रकीर्तिता॥६१॥
असगोत्रमसम्बन्धं प्रेतभूतं तथा द्विजम् ॥
ऊढ्वा दग्ध्वा द्विजाःसर्वे स्नानात्ते शुचयःस्मृताः॥

दक्षसंहितायाम् ।

यज्ञकाले विवाहे च देशभंगे तथैव च ॥
हूयमाने तथा चाग्नौ नाशौचं नापि सूतकम्६३
वायुपु०।अपां मध्ये गवां गोष्ठे विवाहे यज्ञमण्डपे ॥
राहोर्दर्शनकालस्य सूतकं न विधीयते ॥ ६४ ॥
मनुः।असपिण्डं द्विजं प्रेतं विप्रोनिर्हृत्य बन्धुवत्॥
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥६५॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ॥
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥६६॥
अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च ॥
स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति

याज्ञ.।ब्राह्मणेनानुगन्तव्योन शूद्रोन द्विजः क्वचित्।
अनुगम्याम्भसिस्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः
लघुपा.।क्षत्रियं मृतमज्ञानाद्ब्राह्मणोयोनुगच्छति ॥
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ॥६९॥
शवं च वैश्यमज्ञानाद्ब्राह्मणोह्यनुगच्छति ॥
कृत्वा शौचं द्विरात्रं च प्राणायामान्षडाचरेत् ७०
प्रेतीभूतं तु यः शूद्रं ब्राह्मणोज्ञानदुर्बलः ॥
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥७१॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति॥७२॥
तस्माद्द्विजोमृतं शूद्रं न स्पृशेन्न च दाहयेत् ॥
दृष्टे सूर्यावलोकेन शुद्धिरेषा पुरातनी ॥ ७३ ॥
मनुः।न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्॥
अस्वर्ग्या ह्याहुतिःसा स्याच्छूद्रसंस्पर्शदूषिताः७४
ल.पा.देशान्तरगतोविप्रःप्रयासात् कालकारितात
देहनाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि ॥ ७५ ॥

कृष्णाष्टमी त्वमावस्या कृष्णा चैकादशी च या॥
उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत्।७६।

देशान्तरलक्षणमाह ॥ निर्णयसिन्धौ बृहस्पतिः ।

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ॥
वाचोयत्र विभिद्यन्ते तद्देशान्तरमुच्यते॥ ७७ ॥
देशान्तरं वदन्त्येके षष्टियोजनमायतम् ॥
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च ॥७८॥

रोदननिषेधः ॥ कात्यायनयाज्ञवल्क्यस्मृतौ ।

मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणधर्मिणि ॥
धर्मं कुरुत यत्नेन योवः सह गमिष्यति ॥७९ ॥
मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम् ॥
यः करोति ससंमूढोजलबुद्बुदसन्निभे ॥ ८० ॥
गंत्री वसुमती नाशमुदधिर्दैवतानि च ॥
केन प्रत्ययः कथं नाशं मर्त्यलोकोन यास्यति ८१
पञ्चधा संभृतः कायोयदि पञ्चत्वमागतः॥
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥८२ ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ८३
श्लेष्मासुबान्धवैर्मुक्तं प्रेतोभुंक्ते यतोऽवशः ॥
अतोन रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः ८४
शंखः। पराशौचे नरोभुक्त्वा कृमियोनौ प्रजायते॥
भुक्त्वान्नं म्रियते यस्य तस्य योनौ प्रजायते ८५
बृ.पा.। ऋणव्यसनिरोगार्तपराधीनकदर्यकाः ॥
तृष्णावन्तोनिराचाराः पितृमातृविवर्जिताः ८६
स्त्रीजिताश्चानपत्याश्च देवब्राह्मणवर्जिताः ॥
परद्रव्यग्रहस्त्रान्ताः सदा सूतकिनः स्मृताः ८७

अत्रिदक्षस्मृतौ ।

व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ॥
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ८८
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत्॥८९॥

आशौचसंकोचे विचारः ॥ हारलतायाम् ॥ अंगिराः ।

सर्वेषामेव वर्णानां सूतके मृतके तथा ॥

दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥ ६० ॥
देवलः। आशौचं दशरात्रं तु सर्वेषामपरे विदुः ॥
निधने प्रसवे चैव पश्यन्तः कर्मणः क्षयम् ॥ ६१ ॥
सपिण्डानां–समानोदक–सगोत्रलक्षणम् ॥ अग्निपुराणे ।
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ॥
समानोदकभावस्तु निवर्तेत चतुर्दशे ॥ ६२ ॥
जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते ॥
बृहस्प० दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके ॥
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः
अथ द्रव्यतः आशौचापवादः ॥ निर्णयसिन्धौ। मरीचिः ।
लवणे मधुमांसे च पुष्पमूलफलेषु च ॥
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥ ६४ ॥
तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः ॥
पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥ ६५ ॥
स्वयमेव स्वाम्यनुज्ञया ग्राह्यं न तद्धस्तादित्यर्थः ॥
क्रये तु तद्धस्तादपि न दोषः ॥ पक्वं लड्डुकादि ॥
अपक्वं तण्डुलादि ॥

धर्मसिन्धौ । आशौचिहस्तात्तु किमप्येतन्न ग्राह्यम् ॥ पण्ये तु वणिजादेराशौचेपि तद्धस्ताल्लवणादेरामान्नस्य च क्रये न दोषः ॥ जलदधिलाजादिकं तु क्रयेणापि तद्धस्तान्न ग्राह्यम् ॥

याज्ञव०।कालोग्निः कर्म मृद्वायुर्मनोज्ञानं तपोजलम् पश्चात्तापोनिराहारः सर्वेऽमी शुद्धिहेतवः ॥९६॥

मनुः। ज्ञानं तपोग्निराहारोमृन्मनोवार्युपांजनम् ॥ वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥९७

क्षान्त्या शुध्यन्ति विद्वांसोदानेनाकार्यकारिणः॥ प्रच्छन्नपापाजप्येन तपसा वेदवित्तमाः ॥ ९८॥

मृत्तोयैः शुध्यते शोध्यं नदीवेगेन शुद्ध्यति ॥ रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥९९॥

अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति॥ विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति॥१००

अथ अस्पर्शस्पर्शने शुद्धिविचारः ॥ मनुः ।

दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ॥

शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति १
नारं स्पृष्ट्वास्थिसस्नेहं स्नात्वा विप्रोविशुध्यति
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा २
ल.पा.।श्वपाकं चापि चाण्डालं विप्रः संभाषते यदि
द्विजसंभाषणं कुर्यात्सावित्रीं च सकृज्जपेत् ३
चाण्डालैः सह सुप्तं च त्रिरात्रमुपवासयेत् ॥
चाण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः॥ ४॥
चाण्डालदर्शने सद्यआदित्यमवलोकयेत् ॥
चाण्डालस्पर्शने चैव सचैलं स्नानमाचरेत्॥ ५ ॥
वृ.पा.।चाण्डालोदकसंस्पृष्टः शुद्धः स्नानेन जायते॥
तथा तद्भाण्डसंस्पर्शे स्नानमाहुर्मनीषिणः ॥६॥
अत्रिः।चण्डालेन तु संस्पृष्टः स्नानमेव विधीयते॥
उच्छिष्टस्तु च संस्पृष्टस्त्रिरात्रेणैव शुध्यति ॥ ७॥
एकशाखासमारूढश्चण्डालोब्राह्मणोयदा ॥
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥
त्रिरात्रोपोषितोभूत्वा पञ्चगव्येन शुध्यति ॥८॥

वृ.पा.।म्लेच्छभूतासनस्पर्शे क्षेत्रे वा यदि वा खले॥
उपस्पृशेच्छिरः प्रोक्ष्य संशुद्धोजायते द्विजः॥९॥
वस्त्रसंस्पर्शने तस्य सचैलाम्भोवगाहनम् ॥
अंगस्पर्शनवत्ताद्धि वदन्ति द्विजसत्तमाः ॥१०॥
संस्पर्शे मेदाभिल्लानां तथैव ब्रह्मघातिनाम् ॥
पतितानां च संसर्गे स्नानमेवं विधीयते ॥ ११ ॥
उच्छिष्टोब्राह्मणः स्पृष्टउच्छिष्टेन द्विजेन तु ॥
आचम्यैव तु शुध्येतां विष्णुनामानुकीर्तनात् १२
क्षत्रियेण तु संस्पृष्टोब्राह्मणोनक्तभोजनात् ॥
वैश्येन चैव संस्पृष्टोनक्ताशी पञ्चगव्यपाः॥१३॥
शूद्रेणैव तु संस्पृष्टएकरात्रोपवासकृत् ॥
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति ॥ १४ ॥

आपस्तम्बः ।

उदक्या ब्राह्मणी शूद्रामुदक्यां स्पृशते यदि ॥
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति॥१५॥
एवं तु क्षत्रिया वैश्या ब्राह्मणी चेद्रजस्वला ॥

सचैलं प्लवनं कृत्वा दिनस्यान्ते घृतं पिबेत् ॥ १६ ॥
सवर्णेषु तु नारीणां सद्यः स्नानं विधीयते ॥
एवमेव विशुद्धिः स्यादापस्तंबोऽब्रवीन्मुनिः ॥ १७ ॥
बृ.पा. उदक्या ब्राह्मणी स्पृष्टा शुना वा वृषलेन वा ॥
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति १८ ॥
उदक्या सूतिकाम्लेच्छसंस्पर्शेऽस्तमिते रवौ ॥
दिवा हृताम्बुना स्नात्वा शुद्ध्येद्विप्रोऽग्निसन्निधौ ॥
वदन्त्यपां पवित्रत्वं दिवा सूर्यांशुमारुतैः ॥
मुनयोधर्मवेत्तारोरात्रौ चन्द्रांशुमारुतैः ॥ २० ॥
तिलान्वसूनि काष्ठानि अन्त्यजस्यापि वेश्मनः ॥
स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् २१
चतुर्वर्णा शुचिर्नारी कृताभिगमनापि च ॥
प्रक्षाल्य नाभितोधस्तादाचांतस्तु शुचिर्नरः २२ ॥
विप्रे मैथुनिनिस्नानं केचिद्राज्ञि शिरोविना ॥
नाभिं यावद्विशस्तद्वल्लिंगशौचेन्त्यजः शुचिः २३
अभिगच्छन्सुतार्थं यद्दतावृतौ स्त्रियं द्विजः ॥

न कुर्वीत सच स्नानं नाभेरधस्तु शोधयेत्॥ २४॥
यमः। ऋतौ तु गर्भं शंकित्वा स्नानं मैथुनिनः स्मृतम्
अनृतौ तु स्त्रियं गत्वा शौचं मूत्रपुरीषवत्॥ २५॥
उभावप्यशुची स्यातां दम्पती शयने गतौ ॥
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥
वृ.पा.। आद्यसंगी समोदोषी संगसंगी तदर्धतः ॥
तत्संगी तृतीयभागी तुरीयस्तु न दोषभाक् २७॥
आद्यस्पृष्टुर्भवेत्स्नानं द्वितीयस्यापि तत्स्मृतम् ॥
शिरःप्रोक्षणमन्येषामन्यत्राचमनं विदुः ॥ २८ ॥
मनुः। श्वसृगालखरैर्दष्टोग्राम्यैः क्रव्याद्भिरेव च ॥
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ २९ ॥
उष्ट्रयानं समारुह्य खरयानं तु कामतः ॥
स्नात्वा तु विप्रोदिग्वासाः प्राणायामेन शुध्यति॥
वृ.पा। श्वजंबूकवृकाद्यैश्च यदि दष्टोभवेन्नरः ॥
सचैलोजलमाविश्य दत्वाज्यं शुद्धिमर्हति ॥ ३१॥
शुना घ्राणावलीढस्य नखैर्विलिखितस्य च ॥

यतीनां दर्शनं कार्यमग्निना चोपचूडनम् ॥३२॥
कुमारी च शुना दष्टा जम्बुकेन वृकेण वा ॥
दिशं यामापतेत्सूर्यस्तां दिशं सावलोकयेत् ३३॥
दिवसेपि यदा रात्रौ शुना दष्टोभवेद्द्विजः ॥
विप्रं प्रदक्षिणीकृत्य घृतं प्राश्य विशुध्यति ॥३४
अत्रिः। वृकश्वानशृगालैस्तु यदि दष्टस्तु ब्राह्मणः॥
हिरण्योदकसंमिश्रं घृतं प्राश्य विशुध्यति ॥३५॥
ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेण वा ॥
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्॥ ३६ ॥
ल.पा.।अव्रतः सुव्रतोवापि शुना दष्टोभवेद्द्विजः॥
प्राणिपत्य भवेत्पूतो विप्रैश्चक्षुर्निरीक्षितः ॥ ३७ ॥

आपस्त. यद्वोष्टितं काकवलाकयोर्वा, अमेध्य-लिप्तं च भवेच्छरीरम्॥श्रोत्रे मुखे च प्रविशेच्च सम्यक्, स्नानेन लेपोपहतस्य शुद्धिः ॥ ३८ ॥
ऊर्ध्वं नाभेः करौ मुक्त्वा यदंगमुपहन्यते ॥
ऊर्ध्वं स्नानमधः शौचमात्रेणैव विशुध्यति ॥३९॥

उपानहावमेध्यं वा यस्य संस्पृशते मुखम् ॥
मृत्तिकाशोधनं स्नानं पञ्चगव्यं विशोधनम् १४०
उदक्यां यदि गच्छेत्तु ब्राह्मणोमदमोहितः ॥
चान्द्रायणेन शुध्येत ब्राह्मणानां च भोजनैः ॥४१

आचारादर्शे ॥ च्यवनः ।

श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्राम-याजकं यूपं चितं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थिशवस्पृष्टं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचैलाम्भोवगाह्य उत्तीर्य्याग्निमुपस्पृशेद गायत्र्यष्टशतं जपेत् घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत् ॥ ४२ ॥

व्यासः।भासवानरमार्जारखरोष्ट्राणां शुनां तथा ॥
सूकराणाममेध्यं च स्पृष्ट्वा स्नायात्सचैलकम् ४३
लघुहारीतः।श्वविष्ठां काकविष्ठां वा कंकगृध्रनरस्य च
अधोच्छिष्टं तु संस्पृश्य सचैलोजलमाविशेत् ४४॥
शातातपः।रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ ॥

चैलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥ ४५ ॥
मुखे भगस्तथा श्वा च वनिता सर्ववर्णगा ॥
चक्री ध्वजी बध्यघाती ग्रामकुक्कुटशूकरौ॥ ४६॥
एभिर्यदंगं संस्पृष्टं शिरोवर्जं द्विजातिषु ॥
तोयेन क्षालनं कृत्वा आचांतः शुचितामियात् ४७
वृ०पा०।विवाहोत्सवयज्ञेषु संग्रामे जलसंप्लवे ॥
पलायते तथारण्ये स्पर्शदोषोन विद्यते ॥ ४८ ॥
वायुपुराणे।दीर्घकाष्ठेशिलापृष्ठे नौकायां शकटे तटे॥
विवाहे वहुसंपर्के स्पर्शदोषोन विद्यते ॥ ४९ ॥
अत्रिः।देवयात्राविवाहेषु यज्ञप्रकरणेषु च॥
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टं न विद्यते ॥ १५०॥

अथाभक्ष्यभक्षणे अगम्यागमने विचारः ॥ वृ०पा० ॥

शैलूषीं रजकीं चैव नटीं च वेणुवादिनीम्॥
गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीविनीम् ५१
गां नृपं चैव वैश्यं च शूद्रं वाप्यनुलोमजम् ॥
क्षत्रियादिस्त्रियं कृत्वा विप्रश्चान्द्रायणं चरेत् ५२

ब्राह्मणान्नमदञ्छूद्रः शूद्रान्नं ब्राह्मणोप्यदन् ॥
द्वावप्येतावभोज्यान्नौ चरेतां तौ शशिव्रतम् ५३
विप्रेणामन्त्रितोविप्रः शूद्राहूतश्च योऽश्नुते ॥
आमन्त्रयितृभोक्तारौ शुध्येतामैन्दवेन तौ॥५४॥
समानर्षिश्च योगच्छेन् मात्रा सह सगोत्रजाम् ॥
मातुलस्य सुतां चापि विप्रश्चान्द्रायणं चरेत् ५५
पीतशेषं जलं पीत्वा भुक्तोच्छिष्टमथाज्यकम् ॥
अत्त्वा मूत्रपुरीषे तु विप्रश्चान्द्रायणं चरेत्॥५६॥
भाण्डस्थितमभोज्यानां पयोदधि घृतं पिवेत् ॥
द्विजातेरुपवासः स्याच्छूद्रोदानेन शुध्यति॥५७॥
सूतकान्नं द्विजोभुक्त्वा त्रिरात्रोपोषणाच्छुचिः॥
तोयपाने त्वसौ कुर्यात्पञ्चगव्यनिषेवणम् ॥५८॥
घृतं दधि तथा दुग्धं वसन्गोष्ठे सशुद्धिमान् ॥
आभीरस्य गृहे भुक्त्वा कृत्वा वा शूद्रभोजनम् ५६
द्रुपदां वा द्विजोजप्त्वा मानस्तोक्यमथापि वा ॥
क्षुधातिपीडितः पश्चादिति प्राह पराशरः॥६०॥

याज्ञव.।सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासुच
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥६१॥
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ॥
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥६२॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
लिंगं छित्वा वधस्तत्र सकामायाः स्त्रियाअपि ६३
मनुः।अभोज्यानां तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च
जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान् पिवेत् ६४
शुक्तानि च कषायांश्च पीत्वामेध्यान्यपि द्विजः ॥
तावद्भवत्यप्रयतोयावत्तन्न व्रजत्यधः ॥ ६५ ॥
आप.।मूत्रोच्चारंद्विजः कृत्वा अकृत्वा शौचमात्मनः
मोहादभुक्त्वा त्रिरात्रं तु गव्यं पीत्वा विशुध्यति॥
चण्डालेन तु संस्पृष्टोयश्चापः पिवति द्विजः ॥
अहोरात्रोषितोभूत्वा त्रिषवणेन शुध्यति ॥ ६७॥
यमस्मृ.।भुंजानस्य तु विप्रस्य कदाचित्स्त्रवते गुदम्
उच्छिष्टत्वे शुचित्वे च तस्य शौचं विनिर्दिशेत्६८

पूर्वं कृत्वा द्विजः शौचं पश्चादप उपस्पृशेत् ॥
अहोरात्रोषितो भूत्वा जुहुयात्सर्पिषाहुतिम् ॥ ६९॥
यदा भोजनकाले स्यादशुचिर्ब्राह्मणः क्वचित् ॥
भूमौ निधाय तद्ग्रासं स्नात्वा शुद्धिमवाप्नुयात् ७०
भक्षयित्वा तु तद्ग्रासमुपवासेन शुध्यति ॥
आशित्वा चैव तत्सर्वं त्रिरात्रमशुचिर्भवेत् ॥७१॥
अश्नतश्चेद्विरेकः स्यादस्वस्थस्त्रिशतं जपेत् ॥
स्वस्थस्त्रीणि सहस्राणि गायत्र्याः शोधनं परम् ७२
संवर्तः। सुराघटप्रपातोयं पीत्वा नासा जलं तथा॥
अहोरात्रोषितो भूत्वा पञ्चगव्यं पिबेद् द्विजः ७३
अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम् ॥

संवर्तः ।

गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति ॥७४ ॥
आप.। अगम्यागमनं कृत्वा अभक्ष्यस्य च भक्षणम्॥
शुद्धिं चान्द्रायणं कृत्वा अथवान्ते तथैव च॥७५॥

अथ प्राणिवधे शुद्धिविचारः ॥ मनुः ।

किञ्चिदेव तु विप्राय दद्यादास्थिमतां वधे ॥

अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति॥७६
याज्ञ.।फलपुष्पान्नरसजसत्त्वघाते घृताशनम् ॥
किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनास्थिके७७
मनुः।अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः॥
फलपुष्पोद्भवानां च घृतप्राशोविशोधनम् ॥७८॥
फलदानां तु वृक्षाणां छेदने जप्यमृक्छतम् ॥
गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्॥७९॥
याज्ञ.।वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ॥
स्यादोषधिवृथाच्छेदे क्षीराशीगोऽनुगोदिनम्१८०
वृ.पा.।काकं गृध्रं च श्येनं च अन्यं क्रव्यादपक्षिणम्
हत्वा स्यादुपवासेन शुद्धिराह पराशरः ॥ ८१ ॥
ल.पा.।भेरुण्डचाषभासाश्च पारावतकपिंजलौ ॥
पक्षिणां चैव सर्वेषामहोरात्रमभोजनम् ॥ ८२ ॥
एवं चतुष्पदानां च सर्वेषां वनचारिणाम्॥
अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥८३॥

संवर्तः।सर्वासामेव जातीनां मृगाणां वनचारिणाम्
अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥८४॥
वृ.पा.।गोघाती पञ्चगव्याशी गोष्ठशायी च गोनुगः
मासमेकं व्रतं चीर्त्वा गोप्रदानेन शुध्यति ॥८५॥
याज्ञ.।पञ्चगव्यं पिबेद्गोघ्नोमासमासीत संयमः॥
गोष्ठे शयोगोऽनुगामी गोप्रदानेन शुध्यति॥८६॥
ल.पा.। ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे॥
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥८७॥
गवां मूत्रपुरीषेण दधिक्षीरेण सर्पिषा ॥
त्र्यहं स्नात्वा च पीत्वा च कृमिदष्टः शुचिर्भवेत् ८८
क्षत्रियोपि सुवर्णस्य पञ्चमाषान् प्रदाय तु ॥
गोदक्षिणं तु वैश्यस्याप्युपवासं विनिर्दिशेत् ८९
शूद्राणां नोपवासः स्याच्छूद्रोदानेन शुध्यति ९०
मनुः। मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः॥
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ९१
येषां द्विजानां सावित्री नानूच्यते यथाविधि ॥

तांश्चारयित्वा त्रीन्कृच्छ्रान् यथाविध्युपनाययेत्॥
याज्ञ०। उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा॥
पयसा वापि मासेन पराकेणाथवा पुनः ॥ ६३ ॥
त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि ॥
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ६४
मनुः।व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ॥
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति॥६५॥
शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ॥
संवत्सरं यवाहारस्तत्पापमपसेधति ॥ ६६ ॥
हुंकारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः॥
स्नात्वाऽनश्नन्नहः शेषमभिवाद्य प्रसादयेत्॥६७॥
ताडयित्वा तृणेनापि कण्ठे वा बध्यवाससा ॥
विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत्॥६८॥
अवगूर्य त्वब्दशतं सहस्रमभिहत्य च ॥
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥ ६९ ॥
शोणितं यावतः पांसून्संगृह्णाति महीतले ॥

तावन्त्यब्दसहस्राणि तत्कर्ता नरके वसेत् ॥ २०० ॥
अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ॥
कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् १
याज्ञ. । त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ॥
अन्तर्जले विशुध्येत दत्वा गां च पयस्विनीम् २
लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।
जले स्थित्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३ ॥
त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ॥
ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ४ ॥
सहस्रशीर्षा जापी तु मुच्यते गुरुतल्पगः ॥
गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ ५ ॥
प्राणायामशतं कार्यं सर्वपापापनुत्तये ॥
उपपातकजातानामनादिष्टस्य चैव हि ॥ ६ ॥
ओंकाराभिष्टुतं सोम सलिलं पावनं पिबेत् ॥
कृत्वा तु रेतोविण्मूत्रप्राशनं तु द्विजोत्तमः ॥ ७ ॥
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ॥

तत्र तत्र तिलैर्होमो गायत्र्यावाचनं द्विजः॥ ८ ॥
वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियापरम् ॥
न स्पृशन्तीह पापानि महापातकजान्यपि॥ ९ ॥
ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ॥
अहिंसास्तेयमाधुर्ये दमश्चेति यमाः स्मृताः १०
स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ॥
नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादता ॥ ११ ॥

अथ द्रव्यशुद्धिविचारः ॥ मनुः ।

आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ॥
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः॥ १२ ॥
नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् ॥
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः १३
नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ॥
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः॥ १४॥
मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः ॥

रजोभूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् १५
नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे पतन्ति याः ॥
न श्मश्रूणि गतान्यास्यन्न दन्तान्तरधिष्ठितम् १६
शंखः।शुद्धं प्रसारितं पण्यं शुद्धे चाजाश्वयोर्मुखे ॥
मुखवर्जं तु गौः शुद्धा मार्जारश्चाश्रमे शुचिः॥ १७॥
शय्या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः ॥
आत्मनः कथितं शुद्धं न शुद्धं हि परस्य च॥ १८॥
दक्षः।जातमात्रः शिशुस्तावद्यावदष्टौ समावयः ॥
सहि गर्भसमोज्ञेयो व्यक्तिमात्रप्रदर्शितः ॥ १९ ॥
भक्ष्याभक्ष्ये तथापेये वाच्यावाच्ये ऋतानृते ॥
अस्मिन्बाले न दोषः स्यात्सयावन्नोपनीयते २०
उपनीते तु दोषोस्ति क्रियमाणैर्विगर्हितैः ॥
अत्रिस्मृ.।गोदोहने चर्मपुटे च तोयं,यन्त्राकरे
कारुकशिल्पिहस्ते ॥ स्त्रीबालवृद्धाचरितानि या-
न्यप्रत्यक्षदृष्टानि शुचीनि तानि ॥ २१ ॥

१ खान ।

प्राकाररोधे विषमप्रदेशे, सेवानिवेशे भवनस्य दाहे॥
अवास्य यज्ञेषु महोत्सवेषु, तेष्वेव दोषान विकल्प-
नीयाः ॥ प्रपास्वरण्ये घटकस्य कूपे, द्रोण्या
जलं कोशविनिर्गतं च ॥ २२ ॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥
चर्मभाण्डस्तु धाराभिस्तथायन्त्रोद्धृतं जलम् २३
आकराः शुचयः सर्वे वर्जयित्वा सुरालयम् ॥
भृष्टाभृष्टायवाश्चैव तथैव चणकाः स्मृताः ॥ २४ ॥
खर्जूरं चैव कर्पूरमन्यद् भृष्टतरं शुचि ॥
अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च ॥
गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः॥
अदुष्टा सततं धारा वातोद्धूताश्च रेणवः ॥ २६ ॥
आपः। वापीकूपतडागानां दूषितानां च शोधनम्॥
कुम्भानां शतमुद्धृत्य पञ्चगव्यं ततः क्षिपेत् २७
अस्थिचर्मादियुक्तं तु खरश्वानोपदूषितम् ॥

१ परकोटा। २ संकट। ३ सम्पूर्ण॥

उद्धरेदुदकं सर्वं शोधनं परिमार्जनम् ॥२८॥
कूपोमूत्रपुरीषेण यवनेनापि दूषितः ॥
श्वशृगालखरोष्ट्रैश्च क्रव्यादैश्च जुगुप्सितः ॥२९॥
उद्धृत्यैव च तत्तोयं सप्तपिण्डान् समुद्धरेत् ॥
पञ्चगव्यं मृदा पूतं कूपे तच्छोधनं स्मृतम्॥३०॥
अत्रिः।वापकूपतडागानां दूषितानां च शोधनम्
उद्धरेत् षट्शतं पूर्णं पञ्चगव्येन शुध्यति ॥३१॥
अस्थिचर्मावसिक्तेषु खरश्वानादिदूषिते ॥
उद्धरेदुदकं सर्वं शोधनं परिमार्जनम् ॥३२॥
मनुः।पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्॥
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ ३३ ॥
ल.पा.शृतं द्रोणाढकस्यान्नं काकश्वानोपघातितम्
केनेदं शुध्यते चेति ब्राह्मणेभ्योनिवेदयेत्॥ ३४॥
काकश्वानावलीढं तु द्रोणान्नं न परित्यजेत् ॥
वेदवेदांगविद्भिश्चधर्मशास्त्रानुपालकैः ॥
प्रस्थाद्द्वात्रिंशतिद्रोणः स्मृताविप्रस्य आढकः ३५

ततोद्रोणाढकस्यान्नं श्रुतिस्मृतिविदोविदुः ॥
काकश्वानावलीढं तु गवाघ्रातं खरेण वा ॥ ३६॥
स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढके भवेत् ॥
अन्नस्योद्धृत्य तन्मात्रं यच्च लालाहतं भवेत् ३७
सुवर्णोदकमभ्युक्ष्य हुताशनेव तापयेत् ॥
हुताशनेन संस्पृष्टं सुवर्णसलिलेन च ॥
विप्राणां ब्रह्मघोषेण भोज्यं भवति तक्षणात्॥ ३८॥
वसिष्ठः । देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ॥
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत् ॥
तस्मात्तदन्नमुद्धृत्य शेषं संस्कारमर्हति ॥ ३६ ॥
ल॰पा॰। दारवाणां तु पात्राणां तक्षणाच्छुद्धिरिष्यते
मार्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि॥ ४०॥
चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन च ॥
चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा ४१
भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ॥
सुरामात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेपनैः ॥ ४२ ॥

गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च ॥
शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च ॥
गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने ॥
षण्मासान्भुवि निक्षिप्य उद्धृत्य पुनराहरेत् ॥ ४४ ॥
शंखः ॥ निर्यासानां गुडानां च लवणानां तथैव च ॥
कुसुंभकुंकुमानां च ऊर्णाकार्पासयोस्तथा ॥
प्रोक्षणात्कथिता शुद्धिरित्याह भगवान्यमः ॥ ४५ ॥
मनुः ॥ तैजसानां मणीनां च सर्वस्याश्ममयस्य च ॥
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥ ४६ ॥
निर्लेपं कांचनं भाण्डमद्भिरेव विशुध्यति ॥
अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥ ४७ ॥
अपामग्नेश्च संयोगाद्धैमं रौप्यं च निर्बभौ ॥
तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः ॥ ४८ ॥
ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ॥
शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥ ४९ ॥
शंखः ॥ अम्लोदकेन ताम्रस्य सीसस्य त्रपुणस्तथा ॥

क्षारेण शुद्धिः कांस्यस्य लोहस्य च विनिर्दिशेत्॥
अंगिराः। भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति
मनुः। द्रवाणां चैव सर्वेषां शुद्धिराप्लवनं स्मृतम् ॥
प्रोक्षणं संहतानां च दारवाणां च तक्षणम् ॥५१॥
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ॥
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥५२॥
ल.पा.। तूलिकाद्युपधानानि रक्तवस्त्रादिकानि च॥
शोषयित्वार्कतापेन प्रोक्षणाच्छुद्धतामियुः॥५३॥
मनुः। चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च ॥
शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते ॥५४॥
कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ॥
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥ ५५ ॥

पाराशरोऽपि ।

अम्भोजमन्त्रकैरुष्णैः शुध्यतः कौशिकाविके ॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च ॥
मृन्मयानि पुनः पाकैः क्षौमाणि सितसर्षपैः ५६

मनुः।क्षौमवच्छङ्खशृङ्गाणामास्थि दन्तमयस्य च ॥
शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन वा॥५७॥
ल.पा.।दन्तमस्थि तथा शृंगं रौप्यं सौवर्णभाजनम्
मणिपात्राणि शंखश्चेत्येतान्प्रक्षालयेज्जलैः ॥
पाषाणे तु पुनर्घर्षएषा शुद्धिरुदाहृता ॥ ५८ ॥
मनुः।प्रोक्षणात्तृणकाष्ठं च पलालं चैव शुध्यति ॥
मार्जनोपांजनैर्वेश्म पुनः पाकेन मृन्मयम् ॥५९॥

मनुः शंखः ।

मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः ॥
संस्पृष्टं नैव शुध्येत पुनः पाकेन मृन्मयम् ॥६०॥
मनुः।संमार्जनोपांजनेन सेकनोल्लेखनेन च ॥
गवां च परिवासेन भूमिः शुध्यति पञ्चभिः ६१
ल.पा. मुंजोपस्करशूर्पाणां शणस्य फलचर्मणाम्
तृणाकाष्ठस्य रज्जूनामुदकाभ्युक्षणं मतम् ॥६२॥
शंखः।शयनासनयानानां सशूर्पशकटस्य च ॥
शुद्धिः संप्रोक्षणाद्यज्ञे केरकेंधनयोस्तथा ॥६३॥

१ चटाई ।

आ० स्मृ० योगि० ।

नीलीपट्टे जलं तक्रे गावश्चाण्डालमन्दिरे ॥
पञ्चगव्येन भिक्षान्नं पवित्राणि दिने दिने ६४
द्रव्यस्यान्तर्गता नीली न दुष्यति कदाचन ॥
कम्बले पट्टसूत्रे च नीलीदोषोन विद्यते ॥ ६५ ॥
सर्वत्र वसुधा पूता यत्र लेपोन विद्यते ॥
यत्र लेपोभवेत्तत्र पुनर्लेपेन शुध्यति ॥६६ ॥
आप० । रेतःस्पृष्टं शवस्पृष्टमाविकं तु प्रदुष्यति ॥
अद्भिर्मृदा च तन्मात्रं प्रक्षाल्य च विशुध्यति ६७
अंगिरास्मृतौ तु, माविकं च न दुष्यति इति पाठः
शेषं तुल्यमेव ॥

आप० । यच्च कूपात्पिवेत्तोयं ब्राह्मणः शवदूषितात् ॥
कथं तत्र विशुद्धिः स्यादिति मे संशयोभवेत् ६८
अक्लिन्नेन च भिन्नेन केवलं शवदूषिते ॥
नीत्वा कूपादहोरात्रं पञ्चगव्येन शुध्यति ॥६९॥
क्लिन्ने भिन्ने शवे चैव तत्रस्थं यदि तत् पिवेत् ॥

शुद्धिश्चान्द्रायणं तस्य तप्तकृच्छ्रमथापि वा॥७०॥
संवर्त्तः।अन्नं पर्युषितं भुक्त्वा केशकीटैरुपद्रुतम्॥
पतितैः प्रेक्षितं वापि पञ्चगव्यं द्विजः पिबेत् ७१
अंगिराः।अज्ञानात्पिबते तोयंब्राह्मणस्त्वन्त्यजातिषु
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति॥७२॥

आपस्तम्बश्चांगिरःपराशराः।

स्नाता रजस्वला या तु चतुर्थेऽहनि शुध्यति॥
कुर्याद्रजोनिवृत्तौ तु देवपित्र्यादि कर्म च॥७३॥
रोगेण यद्रजः स्त्रीणामन्वहं तु प्रवर्त्तते॥
नाशुचिः सा ततस्तेन तत्स्याद्वैकारिकं मलम्७४
साध्वाचारा न तावत्स्याद्रजोयावत्प्रवर्त्तते॥
रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि॥७५॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी॥
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति॥७६॥
आतुरे स्नानउत्पन्ने दशकृत्वोह्यनातुरः॥
स्नात्वास्नात्वा स्पृशेदेनं ततः शुध्येत्सआतुरः७७

वृ॰पा॰। आमं मांसघृतं क्षौद्रं स्नेहाश्च फलसंभवाः ॥
म्लेच्छभाण्डास्थिता दुष्या निष्क्रान्तौ शुचयः स्मृताः
आभीरभाण्डसंस्थानि पयोदधिघृतानि च ॥
तावत्पूतं हि तद्भाण्डं यावत्तत्तत्र तिष्ठति ॥७९॥
ल॰ पा॰। मार्जारमक्षिकाकीटपतंगकृमिदर्दुराः ॥
मेध्यामेध्यं स्पृशन्तू तोयेनोच्छिष्टं मनुरब्रवीत् ८०
महीं स्पृष्ट्वा गतं तोयं याश्चाप्यन्योन्यविप्रुषः ॥
भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत् ८१
तांबूलेक्षुफलान्येव भुक्ते स्नेहानुलेपने ॥
मधुपर्के च सोमे च नोच्छिष्टं धर्मतोविदुः ॥८२॥
रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ॥
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ॥८३॥ इति

अथ कृच्छ्रचान्द्रायणादिविचारः ॥ १९ ॥

प्राजापत्यलक्षणमाह ।

मनुः। त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्॥
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्द्विजः ॥१॥

अत्रिशंखगौतमाअप्येवमेव ॥

वृ.पा.।एकभक्तैश्च नक्तैश्च तथैवायाचितैरपि ॥
उपवासे चतुर्भिश्च कृच्छ्रः षोडशभिर्दिनैः ॥ २ ॥
याज्ञव.।एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः ॥
अथाकथंचित् त्रिगुणः प्राजापत्योऽयमुच्यते॥ ३॥

अथ ग्राससंख्याः ॥ अत्रिस्मृतौ ।

सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ॥
अयाचितैश्चतुर्विंशपरैस्त्वनशनं स्मृतम् ॥ ४ ॥

तत्रैव ग्रासप्रमाणम् ।

कुक्कुटाण्डप्रमाणं स्याद्यावद्वास्य विशेन्मुखे ॥
एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्॥५॥
वृ.पा.।शिख्यण्डसंमितान्ग्रासांश्चन्द्रव्रते प्रयोजयेत्
दोषः स्यादन्यथाभावे तस्मादुक्तं समाश्रयेत्॥६॥

याज्ञवल्क्योप्येवम् ॥ नक्तविचारः ।

आत्मनोद्विगुणा छाया मन्दी भवति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम्॥७॥

इति स्कान्दाच्च ॥ यत्यादीनामपि सायाह्ने ।

नक्तं निशायां कुर्वीत गृहस्थोविधिसंयुतः ॥
यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् ॥ ८ ॥

इति तत्रैव स्मृत्यन्तरात्॥ इदमपुत्रविधुरोपलक्षणम् । पुत्रवतस्तु रात्रावेव ॥ इति ॥ प्राजापत्ये अन्येऽपि प्रमाणाः सन्ति तथा च ॥

लघुपा.।कृच्छ्रं दे०व्ययुतं चैव प्राणायामशतद्वयम् ॥
पुण्यतीर्थेनार्द्रशिराः स्नानं द्वादश संख्यया ॥
द्वियोजनं तीर्थयात्रा कृच्छ्रमेकं प्रकल्पितम् ॥९॥

धर्मसिन्धौ।तत्र प्राजापत्यप्रत्याम्नायाः। दश सहस्रगायत्रीजपः ॥ गायत्र्या सहस्रं तिलहोमः। क्वचित्सहस्रं व्याहृत्या तिलहोमउक्तः शतद्वयं प्राणायामाः । द्वादश ब्राह्मणभोजनम् । यावत्केशशोषणं विरम्य तीर्थे द्वादश स्नानानि। वेदसंहितापारायणम् ।योजनयात्रा।द्वादशसहस्रं नमस्काराः । द्वात्रिंशदुत्तरशतं प्राणायामान्कृत्वा अहोरात्रमुपोषितः प्राङ्मुखस्तिष्ठेत् ॥ गोमूत्रेण याव-

कभक्षणे एकाहिककृच्छ्रम् ॥ कश्चित् रुद्रैकादशीनीजपात्कृच्छ्रमाह ॥ पावकेष्टिः पावमानेष्टिःषडुपवासाः प्राजापत्यप्रत्याम्नायाः ॥एकविप्रभोजनमुपवासस्य। अत्यशक्तौ सहस्रगायत्रीजपोद्वादश प्राणायामावेति स्मृत्यर्थसारे । प्राजापत्येष्वशक्तस्तु धेनुं दद्यात्पयस्विनीम्। धेनोरभावे निष्कं स्यात्तदर्धं पादमेव वा॥अशीतिगुंजात्मकः कर्षःचत्वारः कर्षानिष्कं निष्कनिष्कार्धनिष्कपादान्यतमप्रमाणं हेमरूप्यं वा धेनुमूल्य देयम् ॥ अत्यशक्तेन निष्कपादार्धरजतं तत्समं धान्यादि वा देयम्। अतिकृच्छ्रे गोद्वयम्। सान्तपने गोद्वयम्। पराके तप्तकृच्छ्रे च गोत्रयम् । कृच्छ्रातिकृच्छ्रे गोचतुष्टयं गोत्रयं वा ॥ चान्द्रायणे अष्टौ पञ्च चतस्रस्तिस्रो वा गावः । मासं पयोव्रते यावकव्रते मासोपवासे च पञ्च गावः॥मासं गोमूत्रयावकव्रते षट्गावः १० इति प्राजापत्यविचारः ॥

अत्रि० त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पिबेत्पयः॥
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षोदिनत्रये ॥११॥
षट् पलानि पिबेदापस्त्रिपलं तु पयः पिबेत्॥
पलमेकं तु वै सर्पिस्तप्तकृच्छ्रं विधीयते ॥१२॥
त्र्यहं तु दधिना भुंक्ते त्र्यहं भुंक्ते च सर्पिषा॥
क्षीरेण तु त्र्यहं भुंक्ते वायुभक्षोदिनत्रयम् ॥१३॥
त्रिपलं दधि क्षीरेण पलमेकं तु सर्पिषा ॥
एतदेव व्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते ॥१४॥
कपिलायास्तु दुग्धासाधारोष्णं यत्पयः पिबेत् ॥
एष०यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् १५
शंखस्मृ० त्र्यहमुष्णं पिबेत्तोयं त्र्यहमुष्णं घृतं पिबेत्॥
त्र्यहमुष्णं पयः पीत्वा वायुभक्षस्त्र्यहं भवेत् १६
तप्तकृच्छ्रं विजानीयाच्छीतैः शीतमुदाहृतम् ॥
द्वादशाहोपवासेन पराकः परिकीर्तितः॥ १७॥
विधिनोदकसिद्धान्नं समश्नीयात्प्रयत्नतः ॥
सक्तून्हि सोदकान्मासं कृच्छ्रं वारुणमुच्यते १८॥

विल्वैरामलकैर्वापि पद्माक्षैरथवाशुभैः ॥
मासेन लोकैः श्रीकृच्छ्रः कथ्यते बुद्धिसत्तमैः ॥१९
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् २०
याज्ञव.।पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः॥
सप्ताहेन तु कृच्छ्रोयं महासान्तपनः स्मृतः ॥२१॥
पर्णोदुम्बरराजीवविल्वपत्रकुशोदकैः ॥
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्रउदाहृतः ॥ २२ ॥
अत्रिः।पद्मोदुंबराविल्वाश्च कुशाश्वत्थपलाशकाः॥
एतेषामुदकं पीत्वा पर्णकृच्छ्रं तदुच्यते ॥ २३ ॥
पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ॥
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते॥२४॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ॥
तुलापुरुषइत्येषज्ञेयः पञ्चदशाहिकः ॥२५॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ॥
धर्मसिन्धौ । एकग्रासपर्याप्तस्य प्राणधारणपर्या-

सस्य वा दुग्धस्य एकविंशतिदिनेषु भक्षणे कृच्छ्रा-
तिकृच्छ्रः। एकभक्तनक्तायाचितद्वयोपवासद्वयैर्-
र्धकृच्छ्रः। यद्वा त्र्यहमयाचितं त्र्यहमुपवासइत्यर्ध-
कृच्छ्रः।एकभक्तायाचितोपवासैः कथंचित् त्रिगुणैः
पादोनकृच्छ्रः ॥ २६ ॥

मनुः।एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्॥
त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन्द्विजः ॥२७॥

वृ.पा.।एकभक्तं च नक्तं च अयाचितमुपोषणम् ॥
पादकृच्छ्रोयमुद्दिष्टस्त्रिघ्नं प्रजापतिव्रतम् ॥
अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनम् २८
चन्द्रवृद्ध्या चरेद्ग्रासाञ्छुक्ले कृष्णे क्षयं नयेत् ॥
चन्द्रक्षयेन भोक्तव्यं यवमध्यं शशिव्रतम् ॥२९॥
विपरीतक्रमेणाश्नन्नादावादाय ह्रासयेत्॥
वर्धयेदन्यपक्षे तु पिपीलीमध्यमैन्दवम् ॥ ३० ॥
अष्टावष्टौ समश्नीयात्सव्रती प्रति वासरम्॥
अष्टग्रासिकमित्येतच्चान्द्रायणमथापरम् ॥ ३१ ॥

शतद्वयं तु पिण्डानां चत्वारिंशत्समन्वितम् ॥
मासेनैवोपभुंजीत चान्द्रायणमथापरम् ॥ ३२ ॥
चतुरः प्रातरश्नीयात्सायं ग्रासांश्च तावतः॥
शिशुचान्द्रायणं तज्ज्ञैः प्रोक्तं पापापनोदनम् ३३
मध्यं दिने यदश्नीयादष्टौ ग्रासान्दिनं प्रति ॥
चान्द्रायणं यतीनां तु व्रतज्ञैः परिकीर्त्तितम् ३४
चान्द्रायणे च कृच्छ्रे च त्रिकालं स्नानमाचरेत्॥
स्नानद्वयं प्रकर्तव्यं व्रतेषु चापरेष्वपि ॥ ३५ ॥
शक्तिं ज्ञात्वा शरीरस्य स्नानं कार्यं तथा व्रतम्॥
असामर्थ्येन कायस्य याच्या पर्षदनुग्रहम् ॥३६॥
शंखः।मुण्डस्त्रिषवणस्नायी अधःशायी जितेन्द्रियः
स्त्रीशूद्रपतितानां च वर्जयेत्परिभाषणम् ॥ ३७॥
पवित्राणि जपेच्छक्त्या जुहुयाच्चैव शक्तितः ॥
अयं विधिः स विज्ञेयः सर्वकृच्छ्रेषु सर्वदा ॥३८॥
मनुः। ख्यापनेनानुतापेन तपसाऽध्ययनेन च ॥
पापकृन्मुच्यते पापात्तथा दानेन चापदि ॥३९॥

व्रतफलमाह ॥ अत्रिः ।

अग्निष्टोमादिभिर्यज्ञैरिष्टैर्द्विगुणदक्षिणैः ॥
यत्फलं समवाप्नोति तथा कृच्छ्रैस्तपोधनः ॥४०॥
शंखः।पापात्मानस्तु पापेभ्यःकृच्छ्रैःसन्तारितानराः
गतपापादिवं यान्ति नात्र कार्या विचारणा॥४१॥
याज्ञ०।अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ॥
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ ४२ ॥
कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात् ॥
यथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः ॥ ४३ ॥

व्रतेषु भक्ष्यमाह ॥ गौतमः । चरुभैक्षसक्तुकण-यावकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि ॥ ॐ भूर्भुवः स्वस्तपः सत्यं यशः श्री-रूपं गीरोजस्तेजः पुरुषोधर्म्मः शिवइत्येतैर्ग्रासा-नुमन्त्रणं प्रतिमन्त्रं मनसा नमः स्वाहेति वा ४४

अथ पञ्चगव्यमाह ॥ यमस्मृतौ ।

शुक्लायामूत्रं गृह्णीयात्कृष्णायागोः शकृत्तथा ॥
ताम्रायाश्च पयोग्राह्यं श्वेतायादधि चोच्यते ४५

कपिलायाघृतं ग्राह्यं महापातकनाशनम् ॥
सर्वे तीर्थे नदीतोये कुशैर्द्रव्यं पृथक् पृथक्॥४६॥
पराशरः।गोमूत्रं कृष्णवर्णायाःश्वेतायाश्चैव गोमयम्
पयश्च ताम्रवर्णायारक्तायागृह्यते दधि ॥ ४७ ॥
कपिलायाघृतं ग्राह्यं सर्वं कपिलमेव वा ॥
अत्रिः।शकृद्द्विगुणगोमूत्रं सर्पिर्दद्याच्चतुर्गुणम् ॥
क्षीरमष्टगुणं देयं पञ्चगव्यं तथा दधि ॥ ४८ ॥
पराशरः।मूत्रमेकपलं दद्यादंगुष्ठार्धं तु गोमयम् ॥
क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ॥
घृतमेकपलं दद्यात् पलमेकं कुशोदकम् ॥ ४९ ॥
गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा दधि५०
तेजोसि शुक्रमित्याज्यं देवस्य त्वाकुशोदकम् ॥
यमः।आहृत्य प्रणवेनैव उत्थाय प्रणवेन च ॥
प्रणवेन समालोड्य प्रणवेन तु संपिबेत् ॥ ५१ ॥
पलाशे मध्यमे पर्णे भाण्डे ताम्रमये तथा॥

पिबेत्पुष्करपर्णे वा ताम्रे वा मृण्मये शुभे॥ ५२ ॥
यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके॥
प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम्॥५३॥
अत्रिः। पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत्॥
उभौ तौ तुल्यदोषौ च वसतो नरके चिरम् ॥५४॥
व्यासः। शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ॥
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥५५॥
हेमाद्रौ। वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते
त्रिरात्रं पञ्चरात्रं वा तेषां व्युष्टिर्न विद्यते ॥५६॥
एवं स्त्रियाणामपि। स्मृत्यर्थसारे स्त्रीशूद्रौ विप्रैः
पञ्चगव्यं कारयित्वा तूष्णीं पिबेत् इति॥५७॥इति
पञ्चगव्यविचारः ॥

अथ स्त्रीधर्मानाह ॥ २० ॥ व्यासस्मृतौ ॥

पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च ॥
उत्थाय शयनाद्यानि कृत्वा वेश्मविशोधनम्॥१॥
मार्जनैर्लेपनैः प्राप्य साग्निशालां स्वमंगणम् ॥

शोधयेदग्निकार्याणि स्निग्धान्युष्णेन वारिणा२
प्रोक्षण्यैरिति तान्येव यथा स्नानं प्रकल्पयेत् ॥
द्वन्द्वपात्राणि सर्वाणि न कदाचिद्वियोजयेत्॥३॥
शोधयित्वा तु पात्राणि पूरयित्वा तु धारयेत् ॥
महानसस्य पात्राणि वहिः प्रक्षाल्य सर्वथा ॥ ४॥
मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं विन्यसेत्ततः ॥
स्मृत्वानि योगपात्राणि रसांश्च द्राविणानि च॥५॥
कृतपूर्वाह्णकार्या च स्वगुरूनभिवादयेत् ॥
ताभ्यां भर्तृपितृभ्यां वा भ्रातृमातुलबान्धवैः॥६ ॥
वस्त्रालंकाररत्नानि प्रदत्तान्येव धारयेत् ॥
मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्तिनी॥ ७ ॥
छायेवानुगता स्वच्छा सखीव हितकर्मसु॥
दासीवादिष्टकार्येषु भार्य्या भर्तुः सदा भवेत्॥८॥
ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत् ॥
वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥ ९ ॥
पतिं चैवाभ्यनुज्ञाता सिद्धमन्नादिनात्मना ॥

भुक्त्वानयेदहः शेषमायव्ययविचिन्तया ॥ १० ॥
पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च ॥
कृतान्नसाधना साध्वी सुभृशं भोजयेत्पतिम् ११॥
नातितृप्त्या स्वयं भुक्त्वा गृहनीतिं विधाय च ॥
आस्तीर्य साधुशयनं ततः परिचरेत्पतिम् ॥ १२॥
सुप्ते पतौ तदभ्याशे स्वपेत्तद्गतमानसा ॥
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया १३
नोच्चैर्वदेन्न पुरुषं न वहून् पत्युरप्रियम् ॥
न केनचिद्विवदेच्च अप्रलापविलापिनी ॥ १४ ॥
न चापि व्ययशीला स्यान्न धर्मार्थविरोधिनी ॥
प्रमादोन्मादरोषेर्ष्या वञ्चनं चातिमानिताम् १५
पैशुन्यहिंसाविद्वेषमहाहंकारधूर्तताः ॥
नास्तिक्यं साहसं स्तेयं दम्भान् साध्वी विवर्जयेत्
एवं परिचरन्ती सा पतिं परमदैवतम् ॥
यशः शमिह यात्येव परत्र च सलोकताम् १७
योषितोनित्यकर्मोक्तं नैमित्तिकमथोच्यते ॥

रजोदर्शनतोदोषात् सर्वमेव परित्यजेत् ॥ १८ ॥
सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् ॥
एकाम्बरावृता दीना स्नानालंकारवर्जिता ॥ १९ ॥
मौनिन्यधोमुखी चक्षुः पाणिपद्भिरचञ्चला ॥
अश्नीयात्केवलं भक्तं नक्तं मृन्मयभाजने ॥ २० ॥
स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ॥
स्नायीत च त्रिरात्रान्ते सचैलमुदिते रवौ ॥ २१ ॥
विलोक्य भर्तुर्वदनं शुद्धा भवति धर्मतः ॥
कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥ २२ ॥

वसिष्ठोपि। त्रिरात्रं रजस्वलाऽशुचिर्भवति सा नांज्यान्नाभ्यंज्यान्नाप्सु स्नायात्॥अधः शयीत दिवा न स्वप्यात् नाग्निं स्पृशेत् ॥ नरज्जुं प्रसृजेन्न दन्तान्धावयेन्न गृहान्निरीक्षयेत् ॥ न हसेन्न किञ्चिदाचरन्नाञ्जलिना जलं पिवेत् न खर्परेण वा न लोहितायसेन वा विज्ञायते ॥ २३ ॥

ल.पा.।ऋतुस्नाता तु या नारी भर्तारं नोपसर्पति॥

सा मृता नरकं याति विधवा च पुनः पुनः २४
ऋतुस्नातां तु योभार्यां सन्निधौ नोपगच्छति ॥
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥२५॥

व्यासोऽपि।

भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः ॥
रजोदर्शनतोयाः स्यूरात्रयः षोडशर्तवः ॥
ततः पुंबीजमाक्लिष्टं शुद्धे क्षेत्रे प्ररोहति ॥ २६ ॥
चतस्रश्चादिमारात्रीः पर्ववच्च विवर्जयेत् ॥
गच्छेद्युग्मासु रात्रीषु पौष्णपित्रर्क्षराक्षसान् २७॥
प्रच्छादितादित्यपथे पुमान् गच्छेत्स्वयोषितः ॥
क्षमालंकृदवाप्नोति पुत्रं पूजितलक्षणम् ॥ २८ ॥
दक्षः।अदुष्टाऽपतितां भार्यां यौवने यः परित्यजेत्॥
सजीवनान्ते स्त्रीत्वं च बन्ध्यत्वं च समाप्नुयात् ॥
दरिद्रं व्याधितं चैव भर्तारं यावमन्यते ॥
शुनी गृध्री च मकरी जायते सा पुनः पुनः ३०
अत्रि।जपस्तपस्तीर्थयात्राप्रव्रज्या मंत्रसाधनम्॥

देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ ३१ ॥
जीवद्भर्तरि या नारी उपोष्य व्रतचारिणी ॥
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥ ३२ ॥
तीर्थस्नानार्थिनी नारी प्रतिपादोदकं पिवेत् ॥
शङ्करस्यापि विष्णोर्वा प्रयाति परमं पदम् ॥ ३३ ॥
ल.पा.।दरिद्रं व्याधितं धूर्तं भर्तारं यावमन्यते ॥
सा शुनी जायते मृत्वा सूकरी च पुनःपुनः ३४ ॥
अपृष्ट्वा चैव भर्तारं या नारी कुरुते व्रतम् ॥
सर्वं तद्राक्षसान्गच्छेदित्येवं मनु रब्रवीत् ॥ ३५ ॥
बान्धवानां सजातीनां दुर्वृत्तं कुरुते तु या ॥
गर्भपातं च या कुर्यान्न तां संभाषयेत् क्वचित् ३६
यत्पापं ब्रह्महत्यायां द्विगुणं गर्भपातने ॥
प्रायश्चित्तं नतस्यास्ति तस्यास्त्यागोविधीयते ३७

दक्षसंहितायाम् ।

अनुकूलकलत्रोयः स्वर्गस्तस्य इहैव हि ॥
प्रतिकूलकलत्रस्य नरकोनात्र संशयः ॥ ३८ ॥

स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम् ॥
रक्तएकोविरक्तोऽन्यस्तदा कष्टतरं नु किम् ३६
अनुकूला त्ववाग्दुष्टा दक्षा साध्वी पतिव्रता ॥
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥ ४० ॥
प्रहृष्टमानसा नित्यं स्थानमानविचक्षणा ॥
भर्तुः प्रीतिकरी या तु भार्या सा चेतरा जरा ४१
अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियंवदा ॥
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी ४२
शिष्योभार्या शिशुर्भ्राता पुत्रोदासःसमाश्रितः॥
यस्यैतानि विनीतानि तस्य लोके हि गौरवम् ४३
मनुः।नास्ति स्त्रीणां पृथग्यज्ञोन व्रतं नाप्युपोषितम्
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ ४४ ॥
पाणिग्राहस्य साध्वी स्त्री जीवतोवा मृतस्य वा ॥
पतिलोकमभीप्सन्ती नाचरेत्किञ्चिदप्रियम् ४५
वैवाहिकोविधिः स्त्रीणां संस्कारोवैदिकः स्मृतः ॥
पतिसेवा गुरौ वासोगृहार्थोऽग्निपरिक्रिया ॥ ४६ ॥

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ॥
स्वप्नोऽन्यगेहवासश्च नारीसन्दूषणानि षट्॥ ४७॥
नैतारूपं परीक्षन्ते नासां वयसि संस्थितिः ॥
सरूपं वा विरूपं वा पुमानित्येव भुंजते ॥४८॥
पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः ॥
रक्षितायत्नतोऽपीह भर्तृष्वेताविकुर्वते ॥ ४९ ॥
एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् ॥
परमं यत्नमातिष्ठेत्पुरुषोरक्षणं प्रति ॥ ५० ॥
शय्यासनमलंकारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्योमनुरकल्पयत्॥ ५१॥
बालया वा युवत्या वा वृद्धया वापि योषिता ॥
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्यं गृहेष्वपि॥
बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ॥
पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम् ५३
पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः॥
एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥ ५४॥

वसिष्ठोप्येवम् ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥
पुत्राश्च स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ५५

पराशरोप्येवमाह ।

जीवन्वापि मृतोवापि पतिरेव प्रभुः स्त्रियः ॥
नान्याऽस्ति देवता तासां पतिरेव प्रभुर्यतः॥५६॥
मनसापि हि दुष्टा स्त्री यान्यभावा पतिं प्रति ॥
सा याति नरकं घोरं तद्द्रोहादणुतोपि वा ५७
नियोज्या गृहकृत्येषु सर्वदा सन्नृभिः स्त्रियः ॥
गृहार्थासक्ताचित्तास्तास्तदेवार्हन्ति शोचितुम् ५८
स्त्रीणामष्टगुणः कामोऽव्यवसायश्च षड्गुणः ॥
लज्जा चतुर्गुणा तासामाहारश्च तदर्धकः॥५९॥
न जातिं नैव वित्तं च न च रूपमपेक्षते ॥
किन्तु ताभिः पुमानेषइत्ति मत्वैव भुज्यते॥ ६०॥
किं कुर्वाणाः स्त्रियोभर्तुरायुष्यधननाशकाः ॥
अनायासेन तास्तस्य परासक्ताभवन्ति हि॥६१॥
नारीणां च नदीनां च गतिर्न ज्ञायते नृभिः ॥

कुलकूलप्रपाते च कालक्षेपोन विद्यते॥ ६२ ॥
चेष्टाचारित्रचित्तानि स्त्रीणां देवान जानते ॥
किं पुनः प्राणिमात्रास्तु सर्वथा नष्टबुद्धयः॥६३॥
तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा ॥
श्वशुरैर्देवराद्यैश्च पितृभ्रात्रादिभिस्तथा ॥ ६४ ॥
विवाहात्प्राक्पिता रक्षेद्यौवनस्थां पतिस्तथा ॥
रक्षेयुर्वार्धके पुत्रा नास्ति स्त्रीणां स्वतन्त्रता॥६५॥
स्वातन्त्र्येण विनश्यन्ति कुलजाअपि योषितः ॥
अस्वातन्त्र्यमतः स्त्रीणां प्रजापतिरकल्पयत्॥६६॥
व्यासः। द्वारोपवेशनं नित्यं गवाक्षेण निरीक्षणम्॥
असत्प्रलापोहास्यं च दूषणं कुलयोषिताम्॥६७॥

सुवासिनीकर्म ॥ सौभाग्यकल्पद्रुमे ।

बुद्ध्वाब्राह्ममुहूर्तेनिजपतिचरणौ सम्प्रणम्यास्य-मस्य, प्रेक्ष्य प्रेम्णाथ नैजं शुभमुकुरतले भूमिम-भ्यर्च्य पत्नी ॥ प्रातः स्मृत्यादि कृत्या पतिपरि-चरणं संविधायैव वेणीं, संरच्याधाय भाले तिल-

कमथ गत्वाऽधोनिमज्जेत्सभूषा ॥ ६८ ॥
स्कान्दे।प्रसुप्तं च सुखासीनं रममाणं यदृच्छया ॥
आतुरेष्वपि कालेषु पतिंनोत्थापयेत् क्वचित् ६९
हरिद्रा कुंकुमं चैव सिन्दूरं कज्जलं तथा ॥
कूर्पासकं च ताम्बूलं मांगल्याभरणं शुभम् ॥७०॥
केशसंस्कारकवरीकरकर्णविभूषणम् ॥
भर्तुरायुष्यमिच्छन्ती दूरयेन्न क्वचित्सती॥७१॥
नियमोदकवर्ह्रींश्च पत्रपुष्पादिकं च यत् ॥
सेवेत भर्तुरुच्छिष्टमिष्टमन्नं फलादिकम् ॥७२॥
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिवेत् ॥
शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियाः ७३

श्रीमद्भागवते ।

स्त्रीणां च पतिदेवानां तच्छुश्रूषानुकूलता ॥
तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥७४॥
सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः ॥
स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा॥७५॥

कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ॥
वाक्यैः सत्यैः प्रियैः प्रेम्णा कालेकाले भजेत्पतिम्
सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ॥
अप्रमत्ता शुचिः स्निग्धापतित्त्वपतितं भजेत् ७७
या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ॥
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ ७८॥
दुःशीलोदुर्भगोवृद्धोजडोरोग्यधनोऽपि वा॥
पतिः स्त्रीभिर्न हातव्योलोकेप्सुभिरपातकी॥७९॥
अस्वर्ग्यमयशस्यं च फल्गुकृच्छ्रं भयावहम् ॥
जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियः ॥ ८०॥

अथ विधवाधर्मानाह ॥ व्यासस्मृतौ ।

विवर्णा दीनवदना देहसंस्कारवर्जिता ॥
पतिव्रता निराहारा शोष्यते प्रोषिते पतौ ॥८१॥
मृतं भर्तारमादाय ब्राह्मणी वह्निमाविशेत् ॥
जीवन्ती चेत्त्यक्तकेशा तपसा शोधयेद्वपुः॥८२॥
दक्षोपि।मृते भर्तरि या नारी समारोहेद्धुताशनम्॥

सा भवेत्तु शुभाचारा स्वर्गलोके महीयते ॥८३॥
व्यालग्राही यथा व्यालं बलादुद्धरते विलात् ॥
तथा सा पतिमुद्धृत्य तेनैव सह मोदते ॥ ८४ ॥
ल.पा.।मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता॥
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥८५॥
ति स्रः कोट्योऽर्धकोटी च यानि लोमानि मानवे॥
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति॥८६॥
मनुः। कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ॥
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥८७॥
आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी ॥
योधर्मएकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥८८॥
अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ॥
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ८९
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ॥
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥९०॥

मदनरत्ने स्कान्दे ।

विधवा कवरीबन्धोभर्तृबन्धाय जायते ॥

शिरसोवपनं तस्मात् कार्यं विधवया सदा॥ ६१॥
एकाहारः सदा कार्यो न द्वितीयः कदाचन ॥
मासोपवासं वा कुर्याच्चान्द्रायणमथापि वा॥६२॥
पर्यंकशायिनी नारी विधवा पातयेत् पतिम् ॥
नैवाङ्गोद्वर्त्तनं कार्यं स्त्रिया विधवया क्वचित् ६३
गन्धद्रव्यस्य संभोगो नैव कार्यस्तया पुनः ॥
तर्पणं प्रत्यहं कार्यं भर्तुस्तिलकुशोदकैः ॥
तत्पितुस्तत्पितुश्चापि नामगोत्रादि पूर्वकम् ६४

इदमपुत्रापरमिति ॥ मदनपारिजातः ।

नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥
कंचुकं न परिदध्याद्वासो न विकृतं वसेत ॥६५॥
वैशाखे कार्तिके माघे विशेषनियमं चरेत ॥

वृद्धहारीतसंहितायाम् ।

केशरंजनताम्बूलगन्धपुष्पादिसेवनम् ॥
भूषितं रंगवस्त्रं च कांस्यपात्रे च भोजनम् ॥६६॥
द्विवारभोजनं चाक्ष्णोरंजनं वर्जयेत्सदा ॥
स्नात्वा शुक्लाम्बरधरा जितक्रोधा जितेन्द्रिया६७

न कल्ककुहका साध्वी तन्द्रालस्यविवर्जिता ॥
सुनिर्मला शुभाचारा नित्यं संपूजयेद्धरिम् ॥ ९८ ॥
धर्मसि॰पत्यौ मृते तु भार्याणां विधिद्वयमुदीरितम्
वैधव्यं पालयेत्सम्यक् सहाग्निगमनं तु वा ९९
पत्यौ मृते च या योषिद्वैधव्यं पालयेत्सदा ॥
सा पुनः प्राप्य भर्तारं स्वर्गलोकं समश्नुते १००
विधवा पालयेच्छीलं शीलभंगात्पतत्यधः ॥
तद्वैगुण्यादपि स्वर्गात् पतिः पतति सर्वथा १०१
तस्याः पिता च माता च भ्रातृवर्गस्तथैव च ॥
अंगिराः। मृते भर्तरि या नारी नीलीवस्त्रं प्रधारयेत्
भर्त्ता तु नरकं याति सा नारी तदनन्तरम् १०२

अथजातिविचारः ॥ २१ ॥ याज्ञवल्क्यः ।

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥१॥
विप्रान्मूर्धावसिक्तोहि क्षत्रियाय विशः स्त्रियाम् ॥
अम्बष्ठः शूद्र्यां निषादोजातःपारशवोऽपि वा ॥२॥

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ
वैश्यात्तु करणः शूद्र्यां विन्नास्वेषविधिः स्मृतः३
ब्राह्मण्यां क्षत्रियात्सूतोवैश्याद्वैदेहिकस्तथा॥
शूद्राज्जातस्तु चाण्डालः सर्वधर्मवहिष्कृतः॥४॥
क्षत्रियामागधं वैश्याच्छूद्रात्क्षत्तारमेव च॥
शूद्रादायोगवं वैश्या जनयामास वै सुतम्॥५॥
माहिष्येण करण्यां तु रथकारः प्रजायते॥
असत्सन्तस्तु विज्ञेयाः प्रातिलोमानुलोमजाः॥६॥
जात्युत्कर्षे युगे ज्ञेयः पञ्चमे सप्तमेपि वा॥
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥७॥

गौतमः। अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सुवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः प्रतिलोमासु सूतमागधायोगवक्षत्तृवैदेहिकचाण्डालाः ब्राह्मण्यजीजनत्पुत्रान् वर्णेभ्यः आनुपूर्व्यात् ब्राह्मणसूतमागधचाण्डालान्॥ तेभ्यएव क्षत्रियामूर्धावसिक्तक्षत्रियधीवरपुल्कसान् तेभ्यएव वैश्याभृज्ज-

कंटकमाहिष्यवैश्यवैदेहान् तेभ्यएव पारशवयवन-
करणशूद्रान् शूद्रेत्येके ॥ ८ ॥

उशना उवाच।

अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम् ॥
अनुलोमविधानं च प्रतिलोमविधिं तथा ॥१॥
सान्तरालकसंयुक्तं सर्वं संक्षिप्य चोच्यते ॥
नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् ॥२॥
जातः सुतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः ॥
वेदानर्हस्तथा चैषां धर्माणामनुबोधकः ॥३॥
सूताद्विप्रप्रसूतानां सुतोवेणुकउच्यते ॥
नृपायामेव तस्यैव जातोयश्चर्मकारकः ॥४॥
ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रजायते ॥
वृत्तं च शूद्रवत्तस्य द्विजत्वं प्रतिसिध्यते ॥५॥
यानानां ये च वोढारस्तेषां च परिचारकाः ॥
शूद्रवृत्त्या तु जीवन्ति न क्षात्रं धर्ममाचरेत् ॥६॥
ब्राह्मण्यां वैश्यसंसर्गाज्जातोमागधउच्यते ॥

वन्दित्वं ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥७॥
प्रशंसावृद्धिकोजीवेद्वैश्यप्रेष्यकरस्तथा ॥
ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डालउच्यते ॥८॥
सीसमाभरणं तस्य कार्ष्णायसमथापि वा ॥
वन्ध्रीं कण्ठे समाबद्धय झल्लरीं कक्षतोपि वा॥६॥
मलापकर्षणं ग्रामे पूर्वाह्णे परिशुद्धिकम् ॥
नापराह्णे प्रविष्टोपि वहिर्ग्रामाच्च नैऋते ॥१०॥
पिण्डीभूताभवन्त्यत्र नोचेद्बध्या विशेषतः ॥
चाण्डालाद्वैश्यकन्यायां जातः श्वपचउच्यते॥११॥
श्वमांसभक्षणं तेषां श्वानएव च तद्बलम् ॥
नृपायां वैश्यसंसर्गादायोगवइति स्मृतः ॥१२॥
तन्तुवायाभवन्त्येव वसुकांस्योपजीविनः ॥
शीलिकाः केचिदत्रैव जीवनं वस्त्रानिर्मिते॥१३॥
आयोगवेन विप्रायां जातास्ताम्रोपजीविनः॥
तस्यैव नृपकन्यायां जातः सूनिकउच्यते ॥१४॥
सूनिकस्य नृपायां तु जाताउद्बन्धकाः स्मृताः ॥

निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः ॥१५॥
नृपायां वैश्यतश्चौर्यात्पुलिन्दःपरिकीर्तितः॥
पशुवृत्तिर्भवेत्तस्य हन्युस्तान्दुष्टसत्वकान् ॥१६॥
नृपायां शूद्रसंसर्गाज्जातः पुल्कसउच्यते ॥
सुरावृद्धिं समारुह्य मधुविक्रयकर्मणा ॥१७॥
कृतकानां सुराणां च विक्रेता याचकोभवेत् ॥
पुल्कसाद्वैश्यकन्यायां जातोरजकउच्यते ॥१८॥
नृपायां शूद्रतश्चौर्य्याज्जातोरञ्जकउच्यते॥
वैश्यायां रञ्जकाज्जातोनर्त्तकोगायकोभवेत् १६
वैश्यायां शूद्रसंसर्गाज्जातोवैदेहिकःस्मृतः ॥
अजानां पालनं कुर्य्यान् महिषीणां गवामपि २०
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् ॥
वैदेहिकात्तु विप्रायां जातश्चर्मोपजीविनः ॥२१॥
नृपायामेव तस्यैव रुचिकः पाचकः स्मृतः ॥
वैश्यायां शूद्रतश्चौर्य्याज्जातश्चक्री च उच्यते २२
तैलपिष्टकजीवी तु लवणं भावयन् पुनः ॥

विधिना ब्राह्मणः प्राप्य नृपायां तु समन्त्रकम् २३
जातः सुवर्णइत्युक्तः सानुलोमाद्धिजः स्मृतः ॥
अथ वर्णाक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम् २४
अश्वं रथं हस्तिनं च वाहयेद्वा नृपाज्ञया ॥
सैनापत्यं च भैषज्यं कुर्याज्जीवेत्तु वृद्धिषु॥ २५॥
नृपायां विप्रतश्चौर्य्यात्संजातोयोभिषक्स्मृतः ॥
अभिषिक्तनृपस्याज्ञां परिपाल्येत्तु वैद्यकम् ॥ २६ ॥
आयुर्वेदमथाष्टांगं तंत्रोक्तं धर्ममाचरेत् ॥
ज्योतिषं गणितं वापि कायिकीं वृद्धिमाचरेत् २७
नृपायां विधिना विप्राज्जातोनृपइति स्मृतः॥
नृपायां नृपसंसर्गात्प्रमादाद् गूढजातकः ॥ २८॥
सोऽपि क्षत्रियएव स्यादाभिषेके च वर्जितः ॥
अभिषेकं विना प्राप्य गोजइत्याभिधायकः ॥२९॥
सर्वं तु राजवृत्तस्य शस्यते पदवन्दनम् ॥
पुनर्भूकरणे राज्ञां नृपकालीनएव च ॥ ३० ॥
वैश्यायां विधिना विप्राज्जातोह्यम्बष्ठउच्यते ॥

कृष्यजीवी भवेत्तस्य तथैवाग्नेयवृत्तिकः ॥ ३१ ॥
ध्वजिनी जीविका वापि अम्बष्ठाः शस्त्रजीविनः॥
वैश्यायां विप्रतश्चौर्य्यात्कुम्भकारः सउच्यते ३२
कुलालवृत्त्या जीवेत नापितावा भवन्त्यतः॥
सूतके प्रेतके वापि दीक्षाकालेऽथवापनम् ॥३३॥
नाभेरूर्ध्वं तु वपनं तस्मान्नापितउच्यते ॥
कायस्थइति जीवेत्तु विचरेच्च इतस्ततः ॥ ३४ ॥
काकाल्लौल्यं यमात्क्रौर्यं स्थपते रथकृन्तनम् ॥
आद्यक्षराणि संगृह्य कायस्थइति कीर्तितः॥३५॥
शूद्रायां विधिना विप्राज्जातः पारशवोमतः ॥
भद्रकादीन्समाश्रित्य जीवेयुः पूतकाः स्मृताः ३६
शिवाद्यागमविद्याद्यैस्तथा मण्डलवृत्तिभिः॥
तस्यां वै चौरसोवृत्तोनिषादोजातउच्यते॥ ३७ ॥
वने दुष्टमृगान्हत्वा जीवनं मांसविक्रयः ॥
नृपाज्जातोथ वैश्यायां गृह्यायां विधिना सुतः ३८
वैश्यवृत्त्या तु जीवेत क्षत्रधर्मं न चारयेत् ॥

तस्यां तस्यैव चौर्य्येण मणिकारः प्रजायते ३९
मणीनां राजतां कुर्यान्मुक्तानां बेधनाक्रियाम् ॥
प्रवालानां च सूत्रित्वं शाखानां वलयक्रियाम् ४०
शूद्रस्य विप्रसंसर्गाज्जातउग्रइति स्मृतः ॥
नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु संचरेत् ४१
तस्यैव चावसंवृत्त्या जातः शुण्डिकउच्यते ॥
जातदुष्टं समारोप्य शुण्डाकर्माणि योजयेत् ॥ ४२ ॥
शूद्रायां वैश्यसंसर्गाद्धाधिना सूचकः स्मृतः ॥
सूचकाद्विप्रकन्यायां जातस्तक्षकउच्यते ॥ ४३ ॥
शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा ॥
नृपायामेव तस्यैव जातोयोमत्स्यबन्धकः ॥ ४४ ॥
शूद्रायां वैश्यतश्चौर्य्यात्कटकारइति स्मृतः ॥
वसिष्ठशापात्त्रेतायां केचित्पारशवास्तथा ॥
वैखानसेन केचित्तु केचिद्भागवतेन च ॥ ४५ ॥
वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौयुगे ॥
कटकारास्ततः पश्चान्नारायणगणाः स्मृताः ४६

शाखावैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः ॥
निषेकाद्याः श्मशानान्ताःक्रियाःपूजांगसूचिकाः
पञ्चरात्रेण वा प्राप्तं प्रोक्तं धर्मं समाचरेत् ॥
शूद्रादेव तु शूद्रायां जातः शूद्रइति स्मृतः ॥४८॥
द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः ॥
सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोन्यथा ॥४९॥
चौर्यात्काकवचोज्ञेयश्चाश्वानां तृणवाहकः ॥
एतत्संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः ॥
जात्यन्तराणि दृश्यन्ते सङ्कल्पादितएव तु ॥५०॥
मनुः। ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम जायते ॥
ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ॥
आभीरोऽम्बष्ठकन्यायामायोगव्यांतु धिग्वणः ५१
अत्रिः। रजकश्चर्मकारश्च नटोवरुडएव च ॥
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः॥५२॥
व्यासः। वणिक्किरातकायस्थमालाकारकुटुम्बिनः
वरटोमेदचण्डालदासश्वपचकोलकाः ॥ ५३ ॥

एतेऽन्त्यजाः समाख्यातायेचान्ये च गवाशनाः ॥
एषां संभाषणात्स्नानं दर्शनादर्कवीक्षणम् ॥५४॥
लघुपा.। शूद्रकन्यासमुत्पन्नोब्राह्मणेन तु संस्कृतः॥
असंस्काराद्भवेद्दासः संस्कारादेव नापितः ॥५५॥
क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तुः यः सुतः ॥
सगोपालइत्ति ख्यातोभोज्योविप्रैर्न संशयः॥५६॥
वैश्यकन्यासमुद्भूतो ब्राह्मणेन च संस्कृतः ॥
सह्यार्धिकइति ज्ञेयोभोज्योविप्रैर्न संशयः ॥५७इति

अथ कलिधर्मानाह ॥ २२ ॥ वृ. पा. ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ॥
द्वापरे यज्ञमेवाहुर्दानमेव कलौयुगे ॥ १ ॥
कृते तु मानवाधर्मास्त्रेतायां गौतमस्य च ॥
द्वापरे शंखलिखिताः कलौ पाराशराः स्मृताः॥ २॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥
द्वापरे कुलमेकं तु कर्तारं च कलौयुगे ॥ ३ ॥
कृते तु लिप्यते देशस्त्रेतायां ग्रामएव च ॥
द्वापरेकुलमेकं तु कलौ कर्ता विलिप्यते ॥ ४ ॥

कृते पतति संभाष्य त्रेतायां स्पर्शनेन तु ॥
द्वापरे भक्षणेन्नस्य कलौ पतितकर्मणा ॥ ५ ॥
अभिगम्य कृते दानं त्रेतायां साभिमन्त्रणम्॥
द्वापरे याच्यमानं तु कलौ दीयेत सेवया ॥ ६ ॥
अभिगम्योत्तमं दानं मध्यमं साभिमन्त्रणम्॥
अधमं याच्यमानं स्यात् सेवादानं तु निष्फलम् ७
कृते धातुगताः प्राणास्त्रेतायां मांससंश्रिताः ॥
द्वापरे रुधिरं यावत्कलावन्ननिषेविणः ॥८ ॥
कृते तत्क्षणिकः शापस्त्रेतायां दशभिर्दिनैः॥
मासेन द्वापरे ज्ञेयः कलौ संवत्सरेण तु ॥६ ॥
युगे युगे तु ये धर्मास्तेषु धर्मेषु ये द्विजाः ॥
तेषां निन्दा न कर्तव्यायुगरूपा द्विजोत्तमाः १०
धर्मःसत्यं च साधुश्च तुर्यांशेन कलौ स्थितः॥
अदानात्तदनाद्यत्वं तुच्छमायुरकार्यतः ॥११॥
धर्मश्च लोकदम्भार्थं पाखण्डार्थं तपस्विता ॥
विविधावाग्धनार्थं स्यात्कलौ सत्यानुकारिणी १२

अल्पक्षीरास्तथा गावः स्वल्पसस्या च मेदिनी ॥
स्त्रीजनन्यः स्त्रियः सर्वाः सुखार्थं कृतमैथुनाः १३
पुरुषानिर्जिताः स्त्रीभिर्भूपालादस्युभिर्जिताः ॥
जितोधर्मश्च पापेन सत्यं च वितथैर्जितम् ॥१४॥
शूद्राश्च ब्राह्मणाचाराः शूद्राचारास्तथा द्विजाः ॥
अन्त्यानुयायिनश्चाद्यावर्णास्तदुपजीविनः॥ १५॥
कृतं तु ब्राह्मणयुगं त्रेता तु क्षात्रियं स्मृतम् ॥
वैश्यं तु द्वापरयुगं कलिः शूद्रयुगं स्मृतम् ॥१६॥
चातुर्वर्णिकनारीणां तथा तुरीयजन्मनाम् ॥
पतिद्विजात्युपास्त्यापि धर्मर्धिर्महती कलौ ॥१७॥
कृते यत्कोटिदस्य स्यात्त्रेतायां लक्षदस्य तत् ॥
द्वापरेऽयुतदस्य स्याच्छतदस्य कलौ फलम् ॥१८॥

सूतउवाच ।

ब्राह्मणाः क्षत्रियावैश्याः शूद्राधर्मपराङ्मुखाः ॥
व्याधधर्मरताः सर्वे दम्भाचारपरायणाः ॥१९ ॥
लोलुपाश्च कृतघ्नाश्च तथा वै भण्डकानराः ॥

अतः स्वल्पायुषः सर्वे भविष्यन्ति कलौ युगे ॥२०॥
अल्पायुष्ट्वन्मनुष्याणां न वेदग्रहणं द्विजाः ॥
विद्याग्रहणशून्यत्वादधर्मोवर्तते पुनः ॥ २१॥
व्युत्क्रमेण प्रजाःसर्वाम्रियन्ते पापतत्पराः ॥
ब्राह्मणाद्यास्तथा वर्णाः संकीर्यन्ते परस्परम् २२
कामक्रोधपरामूढा वृथाहंकारपीडिताः ॥
बद्धवैराभविष्यन्ति परस्य धनलिप्सवः॥ २३ ॥
ब्राह्मणाः क्षत्रियावैश्याः सर्वे धर्मपराङ्मुखाः॥
अल्पार्थाश्च भविष्यन्ति तपःसत्यविवर्जिताः॥२४।
सर्वे जनादयाहीनादाक्षिण्यपरिवार्जिताः ॥
उत्तमानीचतां यान्ति नीचाश्चोत्तमतांतथा॥ २५॥
राजानश्चार्थनिरतास्तथा लोभपरायणाः ॥
धर्मकंचुकसंवीता धर्मविध्वंसकारिणः ॥२६॥
अस्मिन् कलियुगे घोरे सर्वाधर्मसमन्विते ॥
योयोरथाश्वनागाढ्यः स स राजा भविष्यति २७
किंकराश्च भविष्यन्ति शूद्राणां च द्विजातयः॥

धर्मस्त्रियं न गच्छन्ति पतयोजारलक्षणाः ॥२८॥
द्विषान्ति पितरं पुत्रा गुरुं शिष्याद्विषन्ति च॥
पतिं च वनिता द्वेष्टि कृष्णे कृष्णत्वमागते ॥२६॥
लोभाभिभूतमनसः सर्वे दुष्कर्मशीलिनः॥
परान्नलोलुपानित्यं भविष्यन्ति द्विजातयः ३०
परस्त्रीनिरताः सर्वे परद्रव्यपरायणाः ॥
मत्स्यामिषेण जीवन्ति दुहन्ति चाप्यजाविकाः ३१
घोरे कलियुगे प्राप्ते नरं धर्मपरायणम् ॥
असूयां निरताः सर्वे उपहासं प्रकुर्वते ॥३८॥
सरित्तीरे बद्धहालैर्वापयिष्यन्ति चौषधीः॥
अल्पमल्पं फलं तासां भविष्यन्ति कलौ युगे ३३
वेश्यालावण्यशीलेषु स्पृहां कुर्वन्ति योषितः॥
धर्मविघ्नाभविष्यन्ति स्त्रियः स्वपुरुषेषु च ॥३४॥
प्रायशः कृपणानां च वधूनां च तथा द्विजाः॥
साधूनां विधवानां च वित्तान्यपहरन्ति च ॥३५॥
न व्रतानि चरिष्यन्ति ब्राह्मणावेदनिन्दकाः॥

न यक्ष्यन्ति न होष्यन्ति हेतुवादैर्विनाशिताः ३६
द्विजाः कुर्वन्ति दम्भार्थं पितृयज्ञादिकाः क्रियाः॥
अपात्रेषु च दानानि कुर्वन्ति च तथा नराः ३७
क्षीरोपायनिमित्तेन गोषु प्रीतिं च कुर्वते ॥
न कुर्वन्ति तथा विप्राः स्नानशौचादिकाः क्रियाः
अकालधर्मनिरताः कूटयुक्तिविशारदाः ॥
वेदनिन्दापराश्चैव विप्रनिन्दारतास्तथा ॥ ३९ ॥
न कस्यचिदभिमतो विष्णुभक्तिपरस्तथा ॥
देवपूजापरान् दृष्ट्वा उपहासं प्रकुर्वते ॥४० ॥
वध्नन्ति च द्विजानेव धनार्थं राजकिंकराः ॥
ताडयन्ति च विप्रेन्द्राः कृष्णे कृष्णत्वमागते ४१
दानयज्ञजपादीनां विक्रीणान्ते फलं द्विजाः ॥
प्रतिग्रहं प्रकुर्वन्ति चाण्डालाद्यैरपि द्विजाः ४२
कलेः प्रथमपादेऽपि विनिन्दन्ति हरिं नराः॥
युगान्तेऽपि हरेर्नाम नैव कश्चित् स्मरिष्यति ४३
शूद्रस्त्रीसंगनिरता विधवासंगलोलुपाः ॥

शूद्रान्नभोगानिरताभविष्यन्ति कलौ द्विजाः ४४
कुहकैरक्षरैस्तत्र हेतुवादविशारदैः ॥
पाषण्डिनोभविष्यन्ति चातुराश्रम्यनिन्दकाः ४५
न च द्विजातिशुश्रूषां न स्वधर्मप्रवर्त्तनम् ॥
करिष्यन्ति तदा शूद्राः प्रव्रज्यालिंगिनोऽधमाः ॥
शूद्रा धर्मान् प्रवक्ष्यन्ति कूटयुक्तिविशारदाः ॥
अशौचयुक्तमतयः परपक्वान्नभोजिनः ॥४७॥
भविष्यन्ति दुरात्मानः शूद्राः प्रव्राजितास्तथा ॥
उत्कोचजीविनस्तत्र महापापरतास्तथा ॥ ४८ ॥
भविष्यन्त्यथपाषण्डाः कापालाभिक्षवस्तथा ॥
धर्मविध्वंसशीलानां द्विजानां विप्रसत्तमाः॥४९॥
एते चान्ये च बहवः पाषण्डाविप्रसत्तमाः॥
ब्राह्मणाः क्षत्रियावैश्याभविष्यन्ति कलौ युगे ५०
गीतावाद्यपराविप्रा वेददेवपराङ्मुखाः ॥
भविष्यन्ति कलौ प्राप्ते शूद्रमार्गप्रवर्त्तिनः॥५१ ॥
अल्पद्रव्या वृथा लिङ्गा वृथाहंकारदूषिताः ॥

हर्त्तारोन च दातारोभविष्यन्ति कलौयुगे ॥५२॥
प्रतिग्रहपरानित्यं जगदुन्मार्गशालिनः ॥
आत्मस्तुतिपराः सर्वे परानिन्दापरास्तथा॥ ५३ ॥
विश्वासहीनाः पिशुनावेददेवद्विजातिषु ॥
असंस्कृतोक्तिवक्तारोवहुद्वेषरतास्तथा ॥ ५४ ॥
परमायुश्च भविता तदा वर्षाणि षोडश ॥
ततः प्राणान् प्रहास्यन्ति कृष्णे कृष्णत्वमागते५५
पञ्चमे वाथ षष्ठे वा वर्षे कन्याप्रसूयके ॥
सप्तवर्षाश्चाष्टवर्षाः प्रयास्यन्ति नरास्तथा ॥ ५६॥
स्वकर्मत्यागिनः सर्वे कृतघ्नाभिन्नवृत्तयः ॥
याचकाः पिशुनाश्चैव भविष्यन्ति कलौ युगे ५७
परापमाननिरता आत्मस्तुतिपरायणाः ॥
परस्वहरणोपायचिन्तकाःसर्वदा जनाः ॥ ५८ ॥
निन्दां कुर्वन्ति सततं पितृमातृसुतेषु च ॥
वदन्ति वाचा धर्मांश्च चेतसा पापलोलुपाः॥५६ ॥
अत्याह्लादपरास्तत्र भुञ्जते परवेश्मनि ॥

तथैव निन्दापरतावृथाभिशास्तिनोजनाः ॥६०॥
धनविद्यावयोमत्ताः सर्वदुःखपरायणाः ॥
व्याधितस्करदुर्भिक्षैः पीडिताअतिमायिनः॥६१॥
प्रद्विषन्ति तथैवान्यमविचार्य सुदुष्कृतम् ॥
छादयन्ति प्रयत्नेन स्वदोषं पापकर्मणा ॥ ६२ ॥
स्वभार्यां दुष्कृताः सम्यग् विवृण्वन्ति नराधमाः॥
धर्ममार्गप्रणेतारं तिरस्कुर्वन्ति पापिनः ॥ ६३ ॥
धर्मकार्यरतं चैव वृथा विश्रम्भिणोजनाः ॥
भविष्यन्ति कलौ प्राप्ते राजानोम्लेच्छजातयः ६४
शूद्राभैक्ष्यरताश्चैव तेषां शुश्रूषवोद्विजाः ॥
द्विजाश्च क्षत्रियावैश्याः शूद्राश्चान्याश्च जातयः॥
अत्यन्तकामिनः सर्वे संकीर्यन्ते परस्परम्॥
न शिष्योन गुरुः कश्चिन्न पुत्रोन पिता तथा ६६
न भार्या न पतिश्चैव भविता तत्र सङ्करे ॥
कलौ युगे भविष्यन्ति धनाढ्याअपि याचकाः ६७
रसविक्रायिणश्चैव भविष्यन्ति द्विजातयः ॥

धर्मकंचुकसंवीतासुनिवेशधराद्विजाः ॥६८॥
अपण्यविक्रयरताभविष्यन्ति द्विजातयः ॥
वेदानिन्दापराश्चैव धर्मशास्त्रविनिन्दकाः ॥ ६९ ॥
शूद्रवृत्त्या च जीवन्ति द्विजानरकभागिनः॥
अनावृष्टिभयप्राप्ता गगनासक्तदृष्टयः ॥७० ॥
भविष्यन्ति तदा सर्वे जनाः क्षुद्भयकातराः ॥
कन्दमूलफलाहारास्तापसाइव मानवाः ॥ ७१ ॥
आत्मानं घातयिष्यन्ति अनावृष्ट्यातिदुःखिताः
कामार्त्ताह्रस्वदेहाश्च वह्वन्नाशनतत्पराः ॥ ७२ ॥
कलौ सर्वे भविष्यन्ति अल्पभाग्यावहुप्रजाः ॥
शूद्रस्त्रीपोषणपरा वेश्यालावण्यशीलिनः ॥७३ ॥
श्रुतिवाक्यमनादृत्य सदा स्वग्रहतत्पराः ॥
दुःशीलादुष्टशीलेषु करिष्यन्ति सदा स्पृहा॥७४॥
असद्वृत्ताभविष्यन्ति पुरुषेषु कुलांगनाः ॥
पुरुषानृतभाषिण्योदेहसंस्कारवर्जिताः॥७५॥
वाचालाश्च भविष्यन्ति कलौ प्राप्ते च योषितः॥

नगरेषु च ग्रामेषु प्राकारेष्वाधिकाजनाः ॥ ७६ ॥
चौरादिभयभीताश्च काष्ठयन्त्राणि कुर्वते॥
दुर्भिक्षकरपीडाभिरतीवोपद्रुताजनाः ॥ ७७ ॥
गोधूमाढ्यं यवान्नाढ्यं देशं यास्यान्ति दुःखिताः॥
निधाय हृदि कर्माणि ईशयन्ति वचः शुभम् ७८
स्वकार्यसिद्धिपर्यन्तं बन्धुत्वं कुर्वते जनाः ॥
भिक्षवश्चापि मित्रादिस्नेह सम्बन्धयन्त्रिताः॥७९॥
अन्नोपाधिनिमित्तेन शिष्यान् गृह्णन्ति भिक्षवः
उभाभ्यामपि हस्ताभ्यां शिरःकण्डूयनं स्त्रियः८०
कुर्वन्त्योगुरुभर्तृणामाज्ञां भर्त्सन्त्यनादृताः ॥
पापजालेन निरताः पाषण्डजनसंगिनः ॥ ८१ ॥
यदा द्विजाभविष्यन्ति तदा वृद्धिं गतः कलिः ॥
यदा यदा न यक्ष्यन्ति न होष्यन्ति द्विजातयः ॥
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥ ८२ ॥
अधर्मवृद्धिर्भविता बालमृत्युरपि द्विजाः ॥
सर्वधर्मेषु नष्टेषु याति निःश्रीकतां जगत् ॥ ८३॥

एवं कलेः स्वरूपं च कथितं द्विजसत्तमाः॥
हरिभक्तिपराणां च न कालिर्बाधते क्वचित्॥८४॥
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेऽपि तत् ॥
द्वापरे तच्च मासेन चाहोरात्रेण तत् कलौ ॥८५॥
ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्॥
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥८६॥
अहोरात्रं हरेर्नाम कीर्त्तयन्ति च ये नराः ॥
कुर्वन्ति हरिपूजां च न कलिर्बाधते हि तान्॥८७॥
नमोनारायणायेति कीर्त्तयन्ति च ये नराः ॥
निष्कामा वा सकामावा न कलिर्बाधते हि तान्॥
हरिनामपराये तु घोरे कलियुगे द्विजाः ॥
तएव कृतकृत्याश्च न कलिर्बाधते हि तान् ॥८९॥
शिवपूजापराये तु शिवनामपरायणाः ॥
तएव शिवतुल्याश्च घोरे कलियुगे द्विजाः॥९०॥
समस्तजगदाधारं परमात्मस्वरूपिणम् ॥
घोरे कलियुगे प्राप्ते विष्णुं ध्यायन् न सीदति ९१

परमार्थमशेषस्य जगतामादिकारणम् ॥
शारण्यं शरणं यातोगोविन्दं नावसीदति॥६२॥
हरत्यघमशेषं च हरिश्रद्धावतां द्विजाः ॥
तमादिदेवमजरं नरोध्यायन् न सीदति ॥६३॥
अहोऽतीव सौभाग्यास्ते सकृद्वा केशवार्चकाः॥
घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते ॥६४॥
न्यूनातिरिक्तता सिद्धा कलौ वेदोक्तकर्मणाम् ॥
हरिस्मरणमेवात्र संपूर्णफलदायकम् ॥६५॥
हर केशव गोविन्द वासुदेव जगन्मय ॥
इतीरयन्ति ये नित्यं ते कृतार्था न संशयः॥ ६६॥
शिव शङ्कर रुद्रेश नीलकण्ठ त्रिलोचन ॥
इतीरयन्ति ये नित्यं न हि तान्बाधते कलिः ६७
महादेव विरूपाक्ष गङ्गाधर मृडाव्यय ॥
इतीरयन्ति ये नित्यं ते कृतार्थान संशयः ॥६८॥
जनार्द्दन जगन्नाथ पीताम्बरधराच्युत ॥
इतीरयन्ति ये नित्यं ते कृतार्थान संशयः॥६९॥

संसारे भ्रमतां लभ्याः पुत्रदारधनादयः ॥
घोरे कलियुगे प्राप्ते हरिभक्तिःसुदुर्लभा ॥ १०० ॥
इति बृहन्नारदीये सूक्तोक्तं कलौ हरिभक्ति-
माहात्म्यं कथनं संपूर्णम् ॥

अथ तन्त्रशास्त्रे ।

कलिकाले प्रवृद्धे तु सत्यं सत्यं मयोच्यते ॥
न स्थास्यति विना कौलान् पशवोमानवाभुवि १
यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा ॥
न स्थास्यति वरारोहे तदैव प्रबलः कलिः ॥ २ ॥
यदा तु पुण्यपापानां परीक्षावेदसम्भवा ॥
न स्थास्यति शिवेशान्ते तदैव प्रबलः कलिः ३
क्वचिच्छिन्ना क्वचिद्भिन्ना यदा सुरतरंगिणी॥
भविष्यति कुलेशानि तदैव प्रबलः कलिः ॥ ४ ॥
यदा तु म्लेच्छजातीया राजानोधनलोलुपाः॥
भविष्यन्ति महाप्राज्ञे तदैव प्रबलः कलिः ॥ ५ ॥
यदा स्त्रियोऽतिदुर्द्दान्ताः कर्कशाःकलहे रताः॥
गर्हिष्यन्ति च भर्तारं तदैव प्रबलः कलिः ॥ ६ ॥

यदा तु मानवाभूमौ स्त्रीजिताः कामकिंकराः ॥
द्रुह्यन्ति गुरुमित्रादीन् तदैव प्रबलः कलिः ॥७॥
गुरुशुश्रूषणे युक्ता भक्तामातृपदाम्बुजे ॥
अनुरक्ताः स्वदारेषु न हि तान् बाधते कलिः ८इति
धर्मसि·गीता गङ्गा तथा विष्णुःकपिलाश्वत्थसेवनम्
एकादशीव्रतं चैव सप्तमं न कलौ युगे ॥ ९ ॥
विष्णुं शिवं वा भजतां गुरोः पित्रोश्च सेविनाम्॥
गोवैष्णवमहाशैवतुलसीसेविनामपि ॥ १० ॥
न स्यात्कलिकृतोदोषः काश्यां निवसतामपि ॥
कलौ गुरूणां भजनमीशभक्त्याधिकं स्मृतम् ११
जपादौ यत्र या संख्या कलौ सा स्याच्चतुर्गुणा ॥
कलौ दानं महाश्रेष्ठं शिवविष्णोश्च कीर्तनम्॥१२॥

प्रथमस्कन्धे कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यदिति कलौ पुण्यकर्मणां संकल्पेपि सिद्धिः पापानां त्वाचरणादेवेत्युक्तम् ॥

श्रीभागवतेऽपि ।

धर्मार्थकाममोक्षाख्यं यइच्छेच्छ्रेयआत्मनः॥

एकं ह्येव हरेस्तत्र कारणं पादसेवनम् ॥ १३॥
तस्मान्मद्भक्तियुक्तस्य योगिनोवै मदात्मनः ॥
न ज्ञानं न च वैराग्यं प्रायःश्रेयोभवेदिह॥ १४ ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ॥
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥१५ ॥
सर्वं मद्भक्तियोगेन मद्भक्तोलभतेऽञ्जसा ॥
स्वर्गापवर्गमद्धाम कथंचिद्यदि वाञ्छति ॥ १६ ॥
गीतायाम्।अपिचेत्सुदुराचारोभजतेमामनन्यभाक्
साधुरेव समन्तव्यः सम्यग्व्यवसितोहि सः १७
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति॥
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति १८

एवं कलौ भक्तिमाहात्म्यमुक्त्वा इदानीं कलौ वर्ज्यभावानाह ॥

धर्मासि-समुद्रयातुः स्वीकारः कमण्डलु।विधारणम्
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ १६॥
देवराद्यैः सुतोत्पत्तिर्मधुपर्के पशोर्वधः ॥
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥ २०॥

दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ॥
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ २१ ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः ॥
इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः २२
मद्यं वर्ज्यं महापापे मरणान्तविशोधनम्॥
सौत्रामण्यादियज्ञेपि सुरापात्रग्रहस्तथा ॥ २३ ॥
मद्यभक्षादिवामाद्यागमस्य तु न मानता॥
मीमांसाद्वितये सर्वशिष्टैश्च तदनादरात् ॥२४॥
औरसोदत्तकश्चैतौ पुत्रौ कलियुगे स्मृतौ॥
अन्यान् दशविधान् पुत्रान् क्रीताद्यान्वर्जयेत्कलौ
अब्धौ नौयातुर्द्विजस्य प्रायश्चित्तेपि संसर्गो न॥
गवार्थे ब्राह्मणार्थे च प्राणत्यागः कलौ न हि ॥
द्विजानां गोपशूद्रादौ भोज्यान्नत्वं कलौ न हि॥
द्वादशाब्दं गुरौ वासं मुखाग्निधमनक्रियाम् ॥
यतेर्भिक्षां सर्ववर्णे कलौ त्रीणि विवर्जयेत्॥ २६॥
नवोदकनिषेधं च दाक्षिणां गुरुवाञ्छिताम् ॥

वृद्धरुग्णादिमरणं जलाग्निपतनादिभिः ॥ २७ ॥
गोतृप्तिमात्रे भूमिष्ठे पयस्याचमनक्रियाम् ॥
पितृवादे साक्षिदण्डं कलौ पञ्च विवर्जयेत् ॥ २८ ॥
घृतदुग्धादिभिः पक्वमन्नं शूद्रात्कलौ त्यजेत् ॥
भिक्षामटन्यती रात्रौ न वसेत् गृहिणां गृहे ॥ २९ ॥
चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ॥
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ॥ ३० ॥

त्रेतापरिग्रहः सर्वाधानम् ।

अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक् कृतिः
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया ॥ ३१ ॥

अस्यापवादः ।

यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्तते ॥
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे ॥ ३२ ॥

अथ ब्रह्मचारिधर्मानाह ॥ २३ ॥ दक्षः ।

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ॥
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥ १ ॥

जपे होमे तथा दाने स्वाध्याये चरतः सदा ॥
नासौ फलमवाप्नोति कुर्वाणोप्याश्रमाच्च्युतः॥२॥
मेखलाजिनदण्डैश्च ब्रह्मचारीति लक्ष्यते ॥
गृहस्थोदेवयज्ञाद्यैर्नखलोमैर्वनाश्रमी ॥ ३ ॥
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक् ॥
यस्यैतल्लक्षणंनास्ति प्रायश्चित्ती वनाश्रमी ॥४॥

मेखलाविचारः ॥ गृह्यसूत्रे ।

मौञ्जीरशना ब्राह्मणस्य॥५॥धनुर्ज्या राजन्यस्य ॥ ६ । मौर्वी वैश्यस्य॥ ७॥ मुञ्जाभावे कुशाश्मन्तकवल्वजानम् ॥ ८ ॥

मनुः।मौंजी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्यमेखला
क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी॥६॥
मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकवल्वजैः ॥
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा॥१०॥

गौतमोपि।मौञ्जीज्यामौर्वीसौत्र्योमेखलाक्रमेण११

शंखोपि ।

मौञ्जीज्याबन्धनायां तु क्रमान्मौञ्ज्यःप्रकीर्तिताः

पराशरः। मुञ्जमौर्वेशणानां च त्रिवृता रशना स्मृता

अथाजिनविचारः। गृह्यसूत्रे।

ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य॥ १४॥ रौरवं राजन्यस्य॥ १५॥ आजंगव्यं वा वैश्यस्य॥ १६॥ सर्वेषां वा गव्यमसति प्रधानत्वात् ॥ १७ ॥

मनुः। कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः॥

गौतमोपि। कृष्णारुरुवस्ताजिनानि ॥१८ ॥

शंखः। मार्गवैयाघ्रवास्तानि चर्माणि ब्रह्मचारिणाम्।

पारा.। कार्ष्णं च रौरवं वास्तमजिनानि द्विजन्मनाम्

अथ दण्डविचारः ॥ गृह्यसूत्रे। पालाशोब्राह्मणस्य दण्डः॥ २२॥ वैल्वोराजन्यस्य॥ २३॥ औदुम्बरो वैश्यस्य॥ २४ ॥ केशसम्मितो ब्राह्मणस्य दण्डोललाटसंमितः क्षत्रियस्य घ्राणसम्मितोवैश्यस्य सर्वे वा सर्वेषाम् ॥ २५ ॥

मनुः। ब्राह्मणोवैल्वपालाशौ क्षत्रियोवाटखादिरौ॥

पैलवौदुम्बरौवैश्योदण्डमर्हन्ति धर्मतः ॥ २६ ॥

केशान्तिकोब्राह्मणस्य दण्डः कार्यः प्रमाणतः ॥
ललाटसम्मितोराज्ञः स्यात्तु नासान्तिकोविशः २७
ऋजवस्ते तु सर्वे स्युर ब्रणाः सौम्यदर्शनाः ॥
अनुद्वेगकरान्नॄणां सत्वचोनाग्निदूषिताः ॥ २८ ॥

गौतमोपि। वैल्वपालाशौ ब्राह्मणस्य दण्डौ
आश्वत्थपैलवौ शेषे यज्ञियोवा सर्वेषाम् अपीडिता
यूपचक्राःसवल्कला मूर्द्धललाटनासाग्रप्रमाणाः २६
शंखोपि।पर्ण।पिप्पलविल्वानां क्रमाद्दण्डाःप्रकीर्त्तिताः
केशदेशललाटास्यतुल्याः प्रोक्ताः क्रमेण तु ३०
अवक्रास्सत्वचस्सर्वे अनग्न्येधास्तथैव च ॥
पाराशरः।पालाशवटपीलूनां दण्डाश्च क्रमशोमताः
शिरो ललाटनासान्ताः क्रमाद्दण्डाः प्रकीर्त्तिताः॥
अब्रणाः सत्वचोदग्धाउक्ताः शुभकरान्नॄणाम् ३१

यज्ञोपवीतविचारः ॥ मनुः ।

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ॥
शणसूत्रमयंराज्ञोवैश्यस्याविकसौत्रिकम् ॥ ३२॥

शंखः। वस्त्रोपवीते कार्पासक्षौमोर्णानां यथाक्रमम्॥

गौतमः। वासांसि शाणक्षौमचीरकुतपाः सर्वेषां कार्पासं चाविकृतं काषायमप्येके वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः ॥ ३४ ॥

पराशरः। कार्पासशणमेषोर्णान्युपवीतानि त्रिवृन्ति॥

अथ औपनायानिकामन्त्राः॥ गृह्यसूत्रे।

सद्यस्त्वेव गायत्री ब्राह्मणायानुब्रूयादाग्नेयोवै ब्राह्मणइति श्रुतेः । ३६ ॥ त्रिष्टुभं राजन्यस्य ।३७।जगतीं वैश्यस्य ।३८।सर्वेषां वा गायत्रीम् ३९

परा० त्रिष्टुप्जगत्या गायत्र्या त्रयाणामुपनायनम् गायत्र्यामविशेषोवा मुञ्जादिष्वपरेषु च ४० तत्सवितुस्त्वां सवितुर्विश्वारूपाणि वा क्रमात् ॥ औपनायनिकामन्त्रा विप्रादीनामुदाहृताः॥४१॥

भिक्षाविचारः॥ गृह्यसूत्रे।

भवत्पूर्वां ब्राह्मणोभिक्षेत ॥ ४२ ॥ भवन्मध्यां राजन्यः ॥ ४३ ॥ भवदन्त्यां वैश्यः ॥ ४४ ॥

मनुः। भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः ॥
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४५ ॥
शंखः। आदिमध्यावसानेषु भवच्छब्दोपलक्षिताः ॥
भैक्ष्यस्याचरणं प्रोक्तं वर्णानामनुपूर्वशः ॥ ४६ ॥

गौतमः। व्यवहारप्राप्तेन सार्ववर्णिकं भैक्षचरणमभिशस्तं पतितवर्जं आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येण आचार्यज्ञातिगुरुस्वेच्छालाभेऽन्यत्र तेषां पूर्वं परिहरेत् निवेद्य गुरवेऽनुज्ञातो भुञ्जीत ॥ ४७ ॥

परा.। ब्राह्मणो विप्रगेहेषु नृपः स्वेषूत्तमेषु च ॥
वैश्यो विप्रं नृपं स्वेषु कुर्याद्भिक्षां सुवृत्तये ॥ ४८ ॥

भिक्षाप्रशंसा ॥ मनुः।

भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ॥
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ ४९ ॥
व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ॥
काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥ ५० ॥
परा.। एकान्नं न द्विजोऽश्नीयाद्ब्रह्मचारिव्रते स्थितः

भिक्षावृत्तिर्द्विजातीनामुपवाससमा स्मृता ॥
प्रतिग्रहोन भिक्षा स्यान्न तस्यां परपाकता ५१
याज्ञव० । ब्रह्मचर्ये स्थितोनैकमन्नमद्यादनापदि
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतम पीडयन् ॥५२॥

अथ भोजनविधिः ॥ मनुः ।

समाहृत्य तु तद्भैक्ष्यं यावदर्थममायया ॥
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः॥५३॥
उपस्पृश्य द्विजोनित्यमन्नमद्यात्समाहितः ॥
भुंक्त्वा चोपस्पृशेत्सम्यगद्भिःखानि च संस्पृशेत् ५४
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ॥
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ५५
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ॥
अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥ ५६ ॥
नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा ॥
न चैवाध्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् ५७
याज्ञव०।कृताग्निकार्योभुंजीत वाग्यतोगुर्वनुज्ञया॥

अपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥५८॥
व्यासः ईषच्चलितमध्याह्नेऽनुज्ञातो गुरुणा स्वयम्॥
अलोलुपश्चरेद्भैक्षं वृत्तिषूत्तमवृत्तिषु ॥ ५९ ॥
सद्योभिक्षान्नमादाय वित्तवत्तदुपस्पृशेत् ॥
कृतमध्याह्निकोऽश्नीयादनुज्ञातो यथा विधि ॥६०॥
नाद्यादेकान्नमुच्छिष्टं भुक्त्वाचाचामिताभियात्॥
नान्यद्भिक्षितमादद्यादापन्नो द्रविणादिकम् ॥
अनिन्द्यामन्त्रितः श्राद्धे पैत्रेऽद्याद्गुरुचोदितः॥
एकान्नमप्यविरोधे व्रतानां प्रथमाश्रमी ॥
भुक्त्वा गुरुमुपासीत कृत्वा सन्धुक्षणादिकम्॥६२॥

(पाठन योग्यशिष्यलक्षणमाह)

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः॥
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्यादश धर्मतः॥
याज्ञ.। कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ॥
अध्याप्याधर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥६४॥

कुशिष्ये विद्यादाननिषेधः । मनुः ।

धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा॥

तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥६५॥
विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना ॥
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥६६
विद्याब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ॥
असूयकाय मां मादास्तथा स्यां वीर्य्यवत्तम ६७
यमेव तु शुचिं विद्यान्नियत ब्रह्मचारिणम् ॥
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥६८॥

श्रुतिरपि। विद्याह वै ब्राह्मणमाजगाम तवाह-मस्मि त्वं मां पालय अनर्हते मानिने नैवमादागोपाय मां श्रेयसि तथाहमस्मीति ॥ ६९ ॥

वेदाध्ययनविधिमाह ॥ मनुः ।

अध्येष्यमाणस्त्वाचान्तोयथाशास्त्रमुदङ्मुखः ॥
ब्रह्माञ्जलिकृताऽध्याप्योलघुवासा जितेन्द्रियः ७०
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ॥
संहत्य हस्तावध्येयं सहि ब्रह्माञ्जलिः स्मृतः ७१
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥

सव्येन सव्यः स्प्रष्टव्योदक्षिणेन च दक्षिणः॥७२॥
ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ॥
स्रवत्यऽनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति ॥७३॥
गीता।तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥७४॥

वेदाध्ययनं श्रेष्ठत्वं तत्स्तुतिश्च ॥ मनुः ।

वेदमेव सदाभ्यस्येत्तपस्तप्यन्द्विजोत्तमः ॥
वेदाभ्यासोहि विप्रस्य तपःपरमिहोच्यते॥ ७५ ॥
आहैव सनखाग्रेभ्यः परमं तप्यते तपः ॥
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्

वेदाध्ययनफलमाह ॥ याज्ञवल्क्यः ।

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ॥
वेदएव द्विजातीनां निःश्रेयसकरः परः॥ ७७ ॥
त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ॥
तपसोयत्परस्येह नित्यं स्वाध्यायवान् द्विजः॥७८॥

गुरोः अपमाने निन्दाश्रवणे वा दोषमाह॥मनुः।

गुरोर्यत्र परीवादोनिन्दा वापि प्रवर्त्तते ॥

कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ७९
परीवादात्खरोभवति श्वा वै भवति निन्दकः ॥
परिभोक्ता कृमिर्भवति कीटोभवति मत्सरी॥८०॥
अत्रिः। एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ॥
पृथिव्यां नास्ति तद् द्रव्यं यद्दत्वा ह्यनृणी भवेत्॥
एकाक्षरप्रदातारं योगुरुं नाभिमन्यते ॥
शुनां योनिशतं गत्वा चाण्डालेष्वपि जायते८२

अथानध्यायाः ॥ शंखः ।

ब्रह्मावसाने प्रारम्भे प्रणवं च प्रकीर्तयेत्॥
अनध्यायेष्वध्ययनं वर्जयेच्च प्रयत्नतः ॥ ८३ ॥
चतुर्दशीं पञ्चदशीमष्टमीं राहुसूतकम् ॥
उल्कापातं महीकम्पमाशौचं ग्रामविप्लवम्॥८४॥
इन्द्रप्रयाणं श्वहतं सर्वसंघातनिस्वनम् ॥
वाद्यकोलाहलं युद्धमनध्यायान्विवर्जयेत्॥ ८५ ॥
नाधीयीताभियुक्तोऽपि यानगोनचनौगतः ॥
देवायतनवल्मीकश्मशानशवसन्निधौ ॥ ८६ ॥
याज्ञव. त्र्यहं प्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबन्धुषु

उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥८७॥
सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ॥
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥८८॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ॥
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ८९
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ॥
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥९०॥
श्वक्रोष्टुगर्दभोलूकसामवाणार्त्तनिःस्वने ॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ ९१ ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ॥
भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥९२॥
पांसुप्रवर्षे दिग्दाहे सन्ध्यानीहारभीतिषु ॥
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ ९३॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ॥
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः ९४

अथ वर्ज्यावर्ज्यब्रह्मचारिनियमाः ॥ मनुः ।

वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः ॥

शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ॥
कामं क्रोधं च लोभं च नर्त्तनं गीतवादनम्॥९६॥
द्यूतं च जनवादं च परीवादं तथानृतम् ॥
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥९७॥
मनुः।उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने
न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम्॥ ९८॥
अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ॥
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ९९
याज्ञव०मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्
भास्करालोकनाश्लीलः परिवादादि वर्जयेत् १००
हारीतः।छत्रं चोपानहं चैव गन्धमाल्यादि वर्जयेत्
नृत्यं गीतमथालापं मैथुनं च विवर्जयेत् ॥
हस्त्यश्वारोहणं चैव सन्त्यजेत्संयतेन्द्रियः॥१०१॥
वशिष्ठः।
खट्वाशयनदन्तप्रक्षालनाभ्यञ्जनवर्जस्तिष्ठेत् २॥
गौतमः। वर्जयेन्मधुमांसगन्धमाल्यादि वा स्व-

मांसाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवाद्यवादनस्नानदन्तधावनहर्षनृत्यगीतपरिवादभयानि॥ गुरुदर्शने कण्ठप्रावृतावसक्थिकायाश्रयणपादप्रसारणानि॥ निष्ठीवितहसितविजृम्भितास्फोटनानि ॥ स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायां द्यूतं हीनसेवामदत्तादानं हिंसा आचार्यतत्पुत्रस्त्री दीक्षितनामानि । शुष्कां वाचं मद्यं नित्यं ब्राह्मणः अधःशय्याशायी पूर्वोत्थायी जघन्यसंवेशी वाक्बाहूदरकर्मसंयतः नामगोत्रे गुरोः समानतो निर्दिशेत् ॥ नोच्छिष्टाशनस्नपनप्रसाधनपादप्रक्षालनोन्मर्दनोपसंग्रहणानि विप्रोष्योपसङ्ग्रहणं गुरुभार्याणां तत्पुत्रस्य च नैके युवतीनाम्॥ ३ ॥

व्यासः। नापृष्टःक्षिप्तोऽपि भाषेत नाव्रजेत्ताडितोऽपि वा॥
विद्वेषमथ पैशुन्यं हिंसनं चार्कवीक्षणम् ॥ ४ ॥
तौर्य्यत्रिकानृतोन्मादपरिवादानलङ्क्रियाम्॥
अञ्जनोद्वर्त्तनादर्शस्रग्विलेपनयोषितः ॥

वृथाटनमसन्तोषं ब्रह्मचारी विवर्जयेत् ॥ ५ ॥
शंखोपि। मधु मांसंजनं श्राद्धं गीतं नृत्यं च वर्जयेत्॥
हिंसां परापवादं च स्त्रीलीलां च विशेषतः॥ ६ ॥
वर्ज्यान् नियमानुक्त्वाथेदानीं नियमानवर्ज्यानाह ॥ शंखः।
माता पिता गुरुश्चैव पूजनीयास्सदा नृणाम् ॥
क्रियास्तस्याफलाः सर्वायस्यैते नादृतास्त्रयः॥७॥
प्रयतः कल्पउत्थाय स्नातोहुतहुताशनः ॥
कुर्वीत प्रणतोभक्त्या गुरूणामभिवादनम्॥८॥
अनुज्ञातस्तु गुरुणा ततोऽध्ययनमाचरेत् ॥
कृत्वा ब्रह्माञ्जलिं पश्यन् गुरोर्वदनमानतः॥९॥
हितं प्रियं गुरोः कुर्यादहंकार विवर्जितः॥
उपास्य पश्चिमां सन्ध्यां पूजयित्वा हुताशनम् १०
अभिवाद्य गुरुं पश्चाद्‌गुरोर्वचनकृद्भवेत् ॥
गुरोः पूर्वं समुत्तिष्ठेच्छयीत चरमं तथा ॥ ११ ॥
मेखलामाजिनं दण्डं धारयेच्च विशेषतः ॥
अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः॥१२॥

एवं व्रतं तु कुर्वीत वेदस्वीकरणं बुधः ॥
गुरवे च धनं दत्वा स्नायीत तदनुज्ञया ॥ १३ ॥
विष्णुः।योयस्यविहितोदण्डोमेखलाजिनधारणम्॥
सूत्रं वस्त्रं च गृह्णीयाद्ब्रह्मचर्येन यन्त्रितः ॥ १४ ॥
ब्राह्मे मुहूर्त्ते उत्थाय चोपस्पृश्य पयस्तथा ॥
त्रिराचम्य ततः प्राणांस्तिष्ठन्मौनी समाहितः १५
अब्दैश्च तैः पवित्रैस्तु कृत्वात्मपरिमार्जनम् ॥
सावित्रीं च जपंस्तिष्ठेदासूर्योदयनात्पुरा ॥१६॥
अग्निकार्यं ततः कुर्यात् प्रातरेव व्रतं चरेत् ॥
गुरवे तु ततः कुर्यात्पादयोरभिवादनम् ॥ १७ ॥
समित्कुशांश्चोदकुम्भमाहृत्य गुरवे व्रती ॥
प्राञ्जलिः सम्यगासीनउपस्थाय यतः सदा १८
यं यं ग्रन्थमधीयीत तस्य तस्य व्रतं चरेत् ॥
सावित्र्युपक्रमात्सर्वमावेदग्रहणोत्तरम् ॥१९॥
सायंसन्ध्यामुपासीनोगायत्र्यष्टशतं जपेत् ॥
द्विकालभोजनार्थं च तथैव पुनराहरेत् ॥२०॥

हारीतः। उपनीतोमाणवकोवसेद्गुरुकुलेषु च ॥
गुरोः कुले प्रियं कुर्यात्कर्मणा मनसा गिरा॥ २१॥
ब्रह्मचर्यमधःशय्या तथा वह्नेरुपासना ॥
उदकुम्भान्गुरोर्दद्याद् गोग्रासं चेन्धनानिच॥ २२॥
कुर्याद्ध्ययनं चैव ब्रह्मचारी यथाविधि ॥
विधिं त्यक्त्वा प्रकुर्वाणोन स्वाध्यायफलं लभेत् २३॥
यः कश्चित्कुरुते धर्मं विधिं हित्वा दुरात्मवान् ॥
न तत्फलमवाप्नोति कुर्वाणोऽपि विधिच्युतः॥ २४॥
तस्माद्वेदव्रतानीह चरेत्स्वाध्यायसिद्धये ॥
शौचाचारमशेषं तु शिक्षयेद्गुरुसन्निधौ ॥ २५॥
अजिनं दण्डकाष्ठं च मेखलां चोपवीतकम्॥
धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः ॥२६॥
सायं प्रातश्चरेद्भैक्षं भोज्यार्थं संयतेन्द्रियः ॥
आचम्य प्रयतोनित्यं न कुर्याद्दन्तधावनम्॥ २७॥
सन्ध्योपास्तिं प्रकुर्वीत ब्रह्मचारी व्रतस्थितः ॥
अभिवाद्य गुरोः पादौ सन्ध्याकर्मावसानतः ॥

तथा योगं प्रकुर्वीत मातापित्रोश्च भक्तितः २८
एतेषु त्रिषु नष्टेषु नष्टाः स्युः सर्वदेवताः ॥
एतेषां शासने तिष्ठेद् ब्रह्मचारी विमत्सरः॥ २९॥
अधीत्य च गुरोर्वेदान्वेदौ वा वेदमेव वा ॥
गुरवे दक्षिणां दद्यात्संयमी ग्राममावसेत्॥ १३०॥

व्यासोऽपि ।

द्वे जन्मनी द्विजातीनां मातुः स्यात्प्रथमं तयोः॥
द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः ॥३१॥
एवं द्विजातिमापन्नो विमुक्तो वान्यदोषतः॥
श्रुतिस्मृतिपुराणानां भवेदध्ययनक्षमः ॥३२॥
उपनीतो गुरुकुले वसेन्नित्यं समाहितः ॥
बिभृयाद्दण्डकौपीनोपवीताजिनमेखलाः ॥३३॥
पुण्येऽह्नि गुर्वनुज्ञातः कृतमन्त्राहुतिक्रियः ॥
स्मृत्वोङ्कारं च गायत्रीमारभेद्वेदमादितः ॥३४॥
शौचाचारविचारार्थं धर्मशास्त्रमपि द्विजः ॥
पठेत गुरुतः सम्यक् कर्म तद्दिष्टमाचरेत् ॥३५॥

ततोऽभिवाद्य स्थविरान् गुरुं चैव समाश्रयेत् ॥
स्वाध्यायार्थं तदापन्नः सर्वदा हितमाचरेत् ३६॥
समिधोऽग्नावादधीत ततः परिचरेद्गुरुम् ॥
शयीत गुर्वनुज्ञातः प्रह्वश्च प्रथमं गुरोः ॥३७॥
एवमन्वहमभ्यासी ब्रह्मचारी व्रतं चरेत् ॥
हितोपवादः प्रियवाक् सम्यग्गुर्वर्थसाधकः॥ ३८
नित्यमाराधयेदेनमासमासेः श्रुतिग्रहात् ॥
अनेन विधिनाधीतोवेदमन्त्रोद्विजं नयेत्॥३९॥
शापानुग्रहसामर्थ्यमृषीणां च सलोकताम् ॥
पयोऽमृताभ्यां मधुभिः साज्यैः प्रीणान्तिदेवताः४०
तस्मादहरहर्वेदमनध्यायस्मृते पठेत् ॥
यदंगं तदनध्याये गुरोर्वचनमाचरेत्॥ ४१ ॥
व्यतिक्रमादसम्पूर्णमनहंकृतिराचरेत् ॥
परत्रेह च तद्ब्रह्म अनधीतमपि द्विजम्॥ ४२ ॥
मनुः। नित्यं स्नात्वाशुचिःकुर्याद्देवर्षिपितृतर्पणम् ॥
देवताभ्यर्चनं चैव समिदाधानमेव च ॥ ४३ ॥

एकः शयीत सर्वत्र न रेतःस्कन्दयेत्क्वचित्॥
कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमात्मनः ४४
उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्॥
आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥ ४५ ॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ॥
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ ४६ ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु॥
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ ४७॥
सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसम्भवे ॥
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ ४८॥
दूरादाहृत्य समिधः सन्निदध्याद्विहायसि॥
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ ४९ ॥
चोदितो गुरुणा नित्यमप्रचोदित एव वा ॥
कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥ ५०॥
शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च॥
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ५१

नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः ॥
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ५२
हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ ॥
उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ॥५३॥
प्रतिश्रवणसंभाषे शयानोन समाचरेत् ॥
नासीनोन च भुञ्जानोन तिष्ठेन्न पराङ्मुखः ५४
आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ॥
प्रत्युद्गम्यत्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥५५॥
प्राङ्मुखस्याभिमुखोदूरस्थस्यैत्यचान्तिकम् ॥
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥५६॥
नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ॥
गुरोस्तु चक्षुर्विषये न यथेष्टासनोभवेत् ॥५७॥
नोदाहरेदस्य नाम परोक्षमपि केवलम् ॥
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम्॥५८॥
श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ॥
गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु ॥५९॥

मुण्डोवा जटिलोवा स्यादथवा स्याच्छिखाजटः॥
नैनं ग्रामेऽभिनिम्लोचेत् सूर्योनाभ्युदियात्क्वचित्
आचम्य प्रयतोनित्यमुभे सन्ध्ये समाहितः॥
शुचौ देशे जपञ्जप्यमुपासीत यथाविधि ॥६१॥

अथ प्रथमाश्रमः प्रायश्चित्तविधिः ॥ मनुः।

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ॥
स्नात्वार्कमर्चयित्वा त्रिःपुनर्मामित्यृचं जपेत् ६२
तं चेदभ्युदियात्सूर्यः शयानं कामचारतः ॥
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम्॥ ६३॥
सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः॥
प्रायश्चित्तमकुर्वाणोयुक्तः स्यान्महतैनसा ॥६४॥
संवर्तः।उपासीत न चेत्सन्ध्यामग्निकार्यं न वा कृतम्
गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥६५॥
सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च ॥
ब्रह्मचारी तु योश्नीयात् त्रिरात्रेणैव शुद्ध्यति ६६
ब्रह्मचारी तु योगच्छेत्स्त्रियं कामप्रपीडितः ॥
प्राजापत्यं चरेत्कृच्छ्रमथ त्वेकं सुयन्त्रितः॥ ६७॥

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं कथञ्चन ॥
प्रजापत्यं तु कृत्वासौ मौंजीहोमेन शुध्यति॥६८॥
निर्वपेत्तु पुरोडाशं ब्रह्मचारी तु पर्वणि ॥
मन्त्रैः शाकलहोमांगैरग्नावाज्यं च होमयेत् ६९
ब्रह्मचारी तु यः स्कन्देत् कामतः शुक्रमात्मनः ॥
अवकीर्णिव्रतं कुर्यात्स्नात्वा शुध्येदकामतः १७०
भिक्षाटनमटित्वा तु स्वस्थोह्यकान्नमश्नुते ॥
अस्नात्वा चैव योभुंक्ते गायत्र्यष्टशतं जपेत् ७१
शूद्रहस्तेन योऽश्नीयात्पानीयं वा पिवेत्क्वचित् ॥
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति ॥७२॥
शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने॥
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति ॥७३॥
दिवा स्वपिति यः स्वस्थोब्रह्मचारी कथंचन ॥
स्नात्वा सूर्यं समीक्षेत गायत्र्यष्टशतं जपेत्॥७४॥
मनुः। अकृत्वा भैक्षचरणमसमिध्य च पावकम् ॥
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ ७५ ॥

अथ वेदग्रहणे ब्रह्मचर्य्यविधिः ॥ गृह्यसूत्रे ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्॥७६॥
द्वादश वा प्रतिवेदम् ॥ ७७ ॥ यावद्ग्रहणं वा७८

परा॰।द्वादशाब्दं व्रतं धार्यं षडब्दं वा श्रुतिं प्रति॥
अधीत्याथोत्सृजेत्तद्वै दत्वा तु गुरवे परम् ॥ ७६॥
याज्ञव॰।प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा॥
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥८०॥

अथ ब्रह्मचारिभेदाः ॥ पराशरः।

चतुर्धा ब्रह्मचारी स्याद्गायत्रोवैधसस्तथा ॥
प्राजापत्योवृहश्चेति लक्षणानि पृथक् पृथक्॥८१॥
अक्षारलवणाशी स्याद्गायत्र्यभ्यासतत्परः॥
वर्तते भिक्षया नित्यं गायत्रोयं प्रकीर्त्तितः॥८२॥
चतुर्धा द्वादशाब्दानि योधीयानश्चतुःश्रुतिः॥
भिक्षया ब्रह्मचर्येण तिष्ठेद्ब्राह्मः सउच्यते ॥ ८३ ॥
ऋतुकालाभिगामी सन्परस्त्रीपरिवर्जकः ॥
वेदानध्येति; भिक्षाभुक् प्राजापत्योऽयमुच्यते८४

गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ ॥
योवसेदभ्यसंज्ञानं ब्रह्मचारी सनैष्ठिकः ॥ ८५ ॥
दक्षः।द्विविधोब्रह्मचारी स्यादुपकुर्वाणकोह्यथ ॥
द्वितीयोनैष्ठिकश्चैब तास्मिन्नेव ब्रते स्थितः॥८६॥
योगृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ॥
न यतिर्न वनस्थश्च ससर्वाश्रमवार्जितः ॥८७॥

उपकुर्वाणलक्षणम् ॥ व्यासः ।

उपकुर्व्वाणकोयस्तु द्विजः षड्विंशवार्षिकः ॥
केशान्तकर्मणा तत्र यथोक्तचरितब्रतः ॥ ८८ ॥
समाप्य वेदान्वेदौ वा वेदं वा प्रसभं द्विजः ॥
स्नायीत गुर्वनुज्ञातः प्रवृत्तोदितदाक्षिणः ॥८९ ॥
विष्णुः।कुले महति सम्भूतां सवर्णां लक्षणान्विताम्
परिणीय तु षण्मासान्वत्सरं वा न संविशेत ॥
औदुम्बरायणोनाम ब्रह्मचारी गृहे गृहे ॥९०॥

अथ नैष्ठिकधर्माः ।

वेदस्वीकरणे हृष्टोगुर्वधीनोगुरोर्हितः ॥
निष्ठां तत्रैव योगच्छेन्नैष्ठिकस्य उदाहृतः॥९१॥

व्यासः। यस्तूपनयनादेतदामृत्योर्व्रतं चरेत् ॥
सनैष्ठिकोब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात् ॥६२॥
वसि. । ब्रह्मचार्याचार्यंपरिचरेत् आशरीरविमोक्षणात् आचार्ये प्रमृते अग्निं परिचरेत् ॥ विज्ञायते हित्वाग्निराचार्यइति ॥ संयतवाक् चतुर्थषष्ठाष्टमकालभोजी भैक्षमाचरेत् ॥ गुर्वधीनोजटिलः शिखाजटोवा गुरुं गच्छन्तमनुगच्छेत् ॥ आसीनं चानुतिष्ठेत् । शयानं चासीनउपविशेत् आहूताध्यायी सर्वभैक्ष्यं निवेद्य तदनुज्ञया भुञ्जीत खट्वाशयनदन्तप्रक्षालनाभ्यञ्जनवर्जास्तिष्ठेत् ॥ अहनि रात्रावासीत त्रिः कृत्वोऽभ्युपेयादपः ॥ ६३ ॥
हारीतः। तस्मिन्नेव नयेत्कालमाचार्ये यावदायुषम्
तदभावे च तत्पुत्रे तच्छिष्ये वाथवा कुले॥६४॥
न विवाहोनसंन्यासोनैष्ठिकस्य विधीयते ॥
इमं योविधिमास्थाय त्यजेद्देहमतन्द्रितः ॥
नेहभूयोपि जायेत ब्रह्मचारी दृढव्रतः ॥६५॥

योब्रह्मचारी विधिना समाहित, श्चरेत्पृथिव्यां गुरुसेवनेरतः॥संप्राप्य विद्यामतिदुर्लभां शिवां,फलं च तस्याः सुलभं तु विन्दति ॥ ९६ ॥

याज्ञव.।नैष्ठिकोब्रह्मचारी तु वसेदाचार्यसन्निधौ ॥ तदभावेऽस्य तनय पत्न्यां वैश्वानरेऽपि वा॥९७॥

अनेन विधिना देहं साधयन् विजितेन्द्रियः ॥ ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥९८॥

मनुः।यदित्व,त्यन्तिकं वासं रोचयेत गुरोः कुले ॥ युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥ ९९ ॥

आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्॥ सगच्छत्यञ्जसा विप्रोब्राह्मणःसद्म शाश्वतम् २००

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ॥ गुरुदारे सपिण्डेवा गुरुवद्वृत्तिमाचरेत् ॥२०१॥

एतेष्वविद्यमानेषु स्नानासनविहारवान् ॥ प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥२ ॥

एवं चरति योविप्रोब्रह्मचर्यमविप्लुतः ॥

सगच्छत्युत्तमस्थानं न चेहाजायते पुनः॥ ३ ॥

अथ ब्रह्मचर्यलक्षणम् ॥ योगियाज्ञवल्क्यः ।

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा॥
सर्वत्र मैथुनत्यागोब्रह्मचर्यं प्रचक्षते ॥ ४ ॥
दक्षः।ब्रह्मचर्यं सदा रक्षेदष्टधा रक्षणं पृथक्॥
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥ ५ ॥
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
एतन् मैथुनमष्टांगं प्रवदान्ति मनीषिणः ॥ ६ ॥

वेदान्तसंज्ञायाम् ।

दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ॥
सङ्कल्पोऽध्यवसायश्चाक्रियानिर्वृत्तिरेव च ॥ ७ ॥
एतन् मैथुनमष्टांगं प्रवदान्ति मनीषिणः ॥
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ॥ ८ ॥

स्मृत्यन्तरे।

ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः ॥
ये स्थिताब्रह्मचर्येण ब्राह्मणास्ते दिवि स्थिताः ९

महाभारते मोक्षधर्मे ब्रह्मचारिलक्षणम् ।

अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः ॥
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते २१०इति

अथ वानप्रस्थधर्मानाह ॥ २४ ॥ वसिष्ठः ।

वानप्रस्थोजटिलश्चीराजिनवासा ग्रामं च न विशेत् ॥ न फालकृष्टमधितिष्ठेत् ॥ अकृष्टं मूलफलं संचिन्वीत ॥ ऊर्ध्वरेताः क्षमाशयोमूलफलभैक्षेणाश्रमागतमातिथिमर्चयेत्॥ दद्यादेव न प्रतिगृह्णीयात् ॥ त्रिषवणमुदकमुपस्पृशेत् ॥ श्रावणकेनाग्निमाधायाहिताग्निः स्याद् वृक्षमूलिकः ॥ ऊर्ध्वं षड्भ्योमासेभ्योऽनग्निरनिकेतोदद्याद्देवपितृमनुष्येभ्यः सगच्छेत्स्वर्गमानन्त्यमानन्त्यम् ॥

हारीतसंहितायाम् ।

अतः परं प्रवक्ष्यामि वानप्रस्थस्य सत्तमाः ॥
धर्माश्रमं महाभागाः कथ्यमानं निबोधत ॥ १ ॥
गृहस्थः पुत्रपौत्रादीन्दृष्ट्वा पलितमात्मनः ॥
भार्यां पुत्रेषु निःक्षिप्य सह वा प्रविशेद्वनम् ॥ २ ॥

नखरोमाणि च तथा सितगात्रत्वगादि च ॥
धारयन् जुहुयादग्निं वनस्थो विधिमाश्रितः ॥३॥
धान्यैश्च वनसम्भूतैर्नीवाराद्यैरनिन्दितैः ॥
शाकमूलफलैर्वापि कुर्यान्नित्यं प्रयत्नतः ॥ ४ ॥
त्रिकालस्नानयुक्तस्तु कुर्यात्तीव्रं तपस्तदा ॥
पक्षान्ते वा समश्नीयान्मासान्ते वा स्वपक्वभुक् ५
तथा चतुर्थकाल तु भुञ्जीयादष्टमेऽथवा ॥
षष्ठे च कालेऽप्यथवा वायुभक्षोथवा भवेत् ॥ ६ ॥
धर्मे पञ्चाग्निमध्यस्थस्तथा वर्षे निराश्रयः ॥
हेमन्ते च जले स्थित्वा नयेत्कालं तपश्चरन् ॥७॥
एवं च कुर्वता येन कृतबुद्धिर्यथाक्रमम् ॥
अग्निस्त्वात्मनि कृत्वा तु प्रव्रजेदुत्तरां दिशम् ८
आदेहपातं वनगो मौनमास्थाय तापसः ॥
स्मरन्नतीन्द्रियं ब्रह्म ब्रह्मलोके महीयते ॥९॥

तपो हि यः सेवति वन्यवासः, समाधियुक्तः प्रयतान्तरात्मा ॥ विमुक्तपापो विमलः प्रशान्तः,

सयाति दिव्यं पुरुषं पुराणम् ॥ १० ॥
शंखोपि।गृहस्थस्तु यदा पश्येद्वलीपालितमात्मनः॥
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥११॥
पुत्रेषु दारान्निक्षिप्य तया वानुगतोवनम्॥
अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरत् ॥ १२ ॥
यदाहारोभवेत्तेन पूजयेत्पितृदेवताः ॥
तेनैव पूजयेन्नित्यमतिथिं समुपागतम् ॥ १३ ॥
ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् समाहितः ॥
स्वाध्यायं च तथा कुर्याज्जटाश्च विभृयात्तथा १४
तपसा शोषयेन्नित्यं स्वयं चैव कलेवरम् ॥
आर्द्रवासास्तु हेमन्ते ग्रीष्मेपञ्चतपास्तथा १५
प्रावृष्याकाशशायी च नक्ताशी च सदा भवेत्॥
चतुर्थकालिकोवा स्यात्षष्ठकालिक एव वा ॥१६॥
वृक्षैर्वापि नयेत्कालं ब्रह्मचर्यं च पालयेत् ॥
एवं नीत्वा वने कालं द्विजोब्रह्माश्रमी भवेत् ॥१७॥
पराशरः। वानप्रस्थश्चतुर्भेदोवैखानसउदुम्बरः ॥

फेनपोबालखिल्यश्च तल्लक्षणमथोच्यते ॥१८॥
फलैर्मूलैरकृष्टान्नैरग्निकर्म वने वसन् ॥
कुर्यात्पञ्च महायज्ञान् सवैखानसआत्मवित् १६
प्रातर्दिष्टदिगानीतैःफलाकृष्टाशनेन्धनैः ।
उदुम्बरोमहाज्ञानी पञ्च यज्ञाग्निकर्मकृत्॥२०॥
चतुरोऽभ्यासकृद्ग्निकार्यं कुर्वन्वने वसन् ॥
फलस्नेहैः फलैर्वन्यैर्वनान्नैः श्रुतिचोदितैः॥२१॥
उद्धृत्य परिपूताद्भिस्तथा याचितवृत्तिकः ॥
अन्यैर्वन्यैर्वनान्नैश्च फेनपः पञ्चयज्ञकृत्॥ २२॥
वनस्थोबालखिल्योऽसौ वस्ते वल्कलचीवरम् ॥
अग्निकर्मकृदात्मज्ञऊर्जान्ते सञ्चितं त्यजेत् २३
विष्णुःगृहस्थोब्रह्मचारी वा वनवासं यदाचरेत् ॥
चीरवल्कलधारी स्यादकृष्टान्नाशनोमुनिः॥२४॥
गत्वा च विजनं स्थानं पञ्चयज्ञान्न हापयेत् ॥
अग्निहोत्रं च जुहुयादन्ननीवारकादिभिः॥२५॥
श्रावणेनाग्निमाधाय ब्रह्मचारी वने स्थितः ॥

पञ्चयज्ञविधानेन यज्ञं कुर्यादतन्द्रितः ॥ २६ ॥
सञ्चितं तु यदारण्यं भक्तार्थं विधिवद्वने ॥
त्यजेदाश्वयुजे मासि वन्यमन्यत्समाहरेत् ॥२७॥
आकाशशायी वर्षासु हेमन्ते च जलाशयः ॥
ग्रीष्मे पञ्चाग्निमध्यस्थोभवेन्नित्यं वने वसन् २८
कृच्छ्रं चान्द्रायणं चैव तुलापुरुषमेव च ॥
अतिकृच्छ्रं प्रकुर्वीत त्यक्त्वा कामाञ्छुचिस्ततः॥
त्रिसन्ध्यं स्नानमातिष्ठत्सहिष्णुर्भूतजान्गुणान् ॥
पूजयेदतिथींश्चैव ब्रह्मचारी वनं गतः ॥ ३० ॥
प्रतिग्रहं न गृह्णीयात्परेषां किञ्चिदात्मवान् ॥
दाता चैव भवेन्नित्यं श्रद्दधानः प्रियंवदः ॥३१॥
रात्रौ स्थण्डिलशायी स्यात् प्रपदैस्तु दिनं क्षिपेत्॥
वीरासनेन तिष्ठेद्वा क्लेशमात्मन्यचिन्तयन्॥३२॥
केशरोमनखश्मश्रून्न छिन्द्यान्नापि कर्तयेत् ॥
त्यजञ्छरीरसौहार्दं वनवासरतः शुचिः ॥ ३३ ॥
चतुःप्रकारं भिद्यन्ते मुनयः शंसितव्रताः ॥

अनुष्ठानविशेषेण श्रेयांस्तेषां परः परः ॥ ३४ ॥
वार्षिकं वन्यमाहारमाहृत्य विधिपूर्वकम् ॥
वनस्थधर्ममातिष्ठेन्नयेत्कालं जितेन्द्रियः ॥ ३५ ॥
भूरिसंवार्षिकश्चायं वनस्थः सर्वकर्मकृत् ॥
आदेहपतनं तिष्ठेन्मृत्युं चैव न काङ्क्षति ॥ ३६ ॥
षण्मासांस्तु ततश्चान्यः पञ्चयज्ञक्रियापरः ॥
काले चतुर्थे भुञ्जानोदेहं त्यजति धर्मतः ॥ ३७ ॥
त्रिंशद्दिनार्थमाहृत्य वन्यान्नानि शुचिव्रतः ॥
निर्वर्त्य सर्वकार्याणि स्याच्च षष्ठ्यन्नभोजनः ३८
दिनार्थमन्नमादाय पञ्चयज्ञक्रियारतः ॥
सद्यः प्रक्षालको नाम चतुर्थः परिकीर्तितः ॥ ३९ ॥
एवमेते हि वैमान्या मुनयः शंसितव्रताः ॥ ४० ॥
मनुः। एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ॥ ४१ ॥
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ॥
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥ ४२ ॥

सन्त्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् ॥
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ ४३ ॥
अग्निहोत्रं समादाय गृह्यं चाग्निपरिच्छदम्॥
ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः ४४
मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ॥
एतानेव महायज्ञान्निर्वपेद्विधिपूर्वकम् ॥ ४५ ॥
वसीत चर्म चीरं वा सायंस्नायात्प्रगे तथा ॥
जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ४६
यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षां च शक्तितः ॥
अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥ ४७ ॥
स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः
दाता नित्यमनादाता सर्वभूतानुकम्पकः ॥ ४८ ॥
वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ॥
दर्शमस्कन्दयन्पर्व पौर्णमासं च योगतः ॥ ४९ ॥
ऋक्षेष्ट्याग्रायणं चैव चातुर्मास्यानि चाहरेत् ॥
उत्तरायणं च क्रमशो दाक्षिणायनमेव च ॥ ५० ॥

वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः॥
पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथक् ॥५१॥
देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः ॥
शेषमात्मनि युञ्जीत लवणं च स्वयं कृतम् ५२
स्थलजौदकशाकानि पुष्पमूलफलानि च ॥
मेध्यवृक्षोद्भवान्यद्यात्स्नेहांश्च फलसम्भवान्॥ ५३॥
वर्जयेन्मधु मांसं च भौमानि कवकानि च ॥
भूस्तृणं शिग्रुकं चैव श्लेष्मान्तकफलानि च ५४
त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसञ्चितम् ॥
जीर्णानि चैव वासांसि शाकमूलफलानि च ५५
न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥
न ग्रामजातान्यार्तोपि मूलानि च फलानि च ५६॥
अग्निपक्वाशनोवा स्यात्कालपक्वभुगेव वा ॥
अश्मकुट्टोभवेद्वापि दन्तोलूखलिकोऽपि वा ॥५७॥
सद्यः प्रक्षालकोवा स्यान्मांससञ्चयिकोऽपि वा॥
षण्मासनिचयोवा स्यात्समानिचयएव वा ॥ ५८॥

नक्तं चान्नं समश्नीयाद्दिवा वाहृत्य शक्तितः ।
चतुर्थकालिकोवा स्यात्स्याद्वाप्यष्टमकालिकः ५९
चान्द्रायणविधानैर्वा शुक्लकृष्णे च वर्त्तयेत् ॥
पक्षान्तयोर्वाप्यश्नीयाद्यवागूं क्वथितां सकृत् ६०
पुष्पमूलफलैर्वापि कवलैर्वर्त्तयेत्सदा ॥
कालपक्वैः स्वयं शीर्णैर्वैखानसमते स्थितः ॥६१॥
भूमौ विपरिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् ॥
स्थानासनाभ्यां विहरेत्सवनेषूपयन्नपः ॥६२॥
ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः ॥
आर्द्रवासास्तु हेमन्ते क्रमशोवर्धयंस्तपः ॥ ६३॥
उपस्पृशंस्त्रिषवणं पितॄन्देवांश्च तर्पयेत् ॥
तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः ॥६४ ॥
अग्नीनात्मनिवैतानान् समारोप्य यथाविधि ॥
अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ६५॥
अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ॥
शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ ६६ ॥

तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् ॥
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ ६७॥
ग्रामादाहृत्यवाश्नीयादष्टौ ग्रासान् वने वसन् ॥
प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ ६८ ॥
एताश्चान्याश्च सेवेत दीक्षा विप्रोवने वसन् ॥
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥६९॥
ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ॥
विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥७०॥
अपराजितांवास्थाय व्रजेद्दिशमजिह्मगः ॥
आनिपाताच्छरीरस्य युक्तोवार्यनिलाशनः॥७१॥
आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुम्॥
वीतशोकभयोविप्रोब्रह्मलोके महीयते ॥७२॥इति

अथ यतिधर्मान् विचारः ॥ २५ ॥

अथसंन्यासफलम् ॥ संन्यासोपनिषदि ।

संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः॥
एषमे मण्डलं भित्वा परंब्रह्माधिगच्छति ॥ १ ॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ॥

कुलान्युद्धरते प्राज्ञस्संन्यस्तामिति योवदेत् ॥२॥
येच सन्तानजादोषाये दोषादेहसम्भवाः ॥
प्रेषाग्निर्निर्दहेत्सर्वांस्तुषाऽग्निरिव काञ्चनः॥ ३॥
मनुः । मृत्तोयैः शुध्यते शोध्यं नदीवेगेन शुध्यति॥
रजसा स्त्रीमनोदुष्टाद्दु संन्यासेन द्विजोत्तमः ॥ ४ ॥
विष्णुः।एकरात्रोषितस्यापियतेर्या गतिरुच्यते ॥
न सा शक्या गृहस्थेन आतुरोपि च संन्यसेत्॥५॥
संन्यस्तामिति योब्रूयात्प्राणैः कण्ठगतैरपि ॥
न तत्क्रतुशतैः पुण्यं प्राप्तुं शक्नोति मानवः ६
मनुः। योदत्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ॥
तस्य तेजोमयालोकाभवन्ति ब्रह्मवादिनः॥ ७ ॥

अथ संन्यासनिर्णयः ॥ जावालश्रुतौ ।

ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत् ॥ ८ ॥

याज्ञव०।वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्॥
प्राजापत्यान्तदन्ते तानग्नीनारोप्यचात्मनि ९

अधीतवेदोजयकृत्पुत्रवानन्नदोग्निमान् ॥
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा १०
एतदाश्रमसमुच्चयपक्षे । तत्रैव जावालश्रुतौ
त्वन्येऽपि पक्षाः उक्ताः ॥ यदि वेतरथा ब्रह्मचर्या-
देव प्रव्रजेद् गृहाद्वावनाद्वाऽथ पुनरव्रती वा व्रतीवा
स्नातकोवाऽस्नातकोवोत्सन्नाग्निरनग्निकोवा॥
यदहरेवविरजेत्तदहरेव प्रव्रजेत् ॥ ११ ॥
आंगिराः। प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेद्वा गृहादपि ॥
वनाद्वा प्रव्रजेद्विद्वानातुरोवाथ दुःखितः ॥१२॥
वृहस्पतिः। संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया
प्रव्रजन्त्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥ १३॥

नृसिंहपुराणे ।

यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं शिरः ॥
संन्यसेदकृतोद्वाहोब्राह्मणोब्रह्मचर्यवान् ॥ १४ ॥
महाभा०।उत्पन्ने सङ्कटेघोरे चौरव्याघ्रादि सङ्कटे॥
भयभीतस्य संन्यासमंगिरामुनिरब्रवीत् ॥ १५॥

आतुराणां च संन्यासे न विधिर्नैव च क्रिया ॥
प्रेषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत् ॥ १६ ॥

श्रुतिरप्याह। यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत् ॥ १७ ॥

अत्र विप्रस्यैवाधिकारोन क्षत्रियवैश्ययोः ॥

तथाच श्रुतिः। अथ परिव्राड्विवर्णवासामुण्डोऽपरिग्रहःशुचिरद्रोही भैक्षाणोब्रह्मभूयाय भवति एषपन्थाब्राह्मणाहानुवित्तस्तेनैति संन्यासी ब्रह्मविदिति ॥ १८ ॥

मनुः। आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्

योगियाज्ञवल्क्योपि ।

चत्वारोब्राह्मणस्योक्ताआश्रमाः श्रुतिचोदिताः ॥
क्षत्रियस्य त्रयः प्रोक्ताद्वावेकोवैश्यशूद्रयोः॥२०॥

विष्णुः। आश्रमास्तुत्रयःप्रोक्तावैश्यराजन्ययोस्तथा
परिव्राज्याश्रमप्राप्तिर्ब्राह्मणस्यैव चोदिता ॥२१॥

अन्यच्च। प्रथमादाश्रमाद्वापि विरक्तोभवसागरात्॥
ब्राह्मणोमोक्षमन्विच्छंस्त्यक्त्वा संगान् परित्यजेत्॥

वामनपुराणेऽपि ।

मुखजानामयं धर्मोयद्विष्णोर्लिंगधारणम् ॥
बाहुजातोरुजातानां नायं धर्मोविधीयते ॥ २३॥
काषायंब्राह्मणस्योक्तं नान्यवर्णस्य कस्यचित्स्मृतेः
पूर्वजन्मशतं भूत्वा ब्राह्मणोवेदपारगः ॥
ततः संन्यासमाप्नोति यस्माद्भूयोनजायते॥ २५॥
बौधा । मुखजानामयं धर्मोयद्विष्णोर्लिङ्गधारणम्॥
राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः ॥ २६ ॥

योपि ( संन्यासं पलपैतृकम् ) इति कलौ निषेधः सोपि त्रिदण्डादिपरः इति निर्णयसिन्धौ ।

( वैराग्यं विना संन्यासे दोषः ) परमहंसोपानिषदि ।

काष्ठदण्डोधृतोयेन सर्वाशी ज्ञानवर्जितः ॥
सयाति नरकान् घोरान् महारौरवसंज्ञकान्॥ २७॥
विष्णुः।त्रिदण्डं लिंगमाश्रित्यजीवन्तिवहवोद्विजाः
न तेषामपवर्गोस्ति लिंगमात्रोपजीविनाम्॥ २८॥
दक्षोपि।काष्ठदण्डंसमाश्रित्यजीवन्तिवहवोनराः।
नरके रौरवे घोरे कर्मत्यागात् पतन्ति ते ॥२९॥

स्मृत्यन्तरे ।

काष्ठस्यैकेन दण्डेन कर्मत्यागात् पतत्यधः ॥
ज्ञानेन सहदण्डेन कर्मत्यागात् परं भवेत् ॥२०॥

परमहंसोपनिषदि ।

यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं च सब्रह्महा भवेत् ॥
यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं च सपौल्कसो भवेत्॥
यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं च सआत्महा भवेत्
तस्माद्भिक्षुर्हिरण्यंरसेन न दृष्टं च न स्पृष्टं च न ग्राह्यं च ॥ ३१ ॥

तत्रैव नारायणीटीकायाम् ।

पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ॥
धीपूर्वरेतउत्सर्गोद्रव्यसङ्ग्रहएव च ॥ ३२ ॥
दक्षोपि पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति
श्वपादेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्॥ ३३॥
अंगिराः। क्षेत्रं गावो हिरण्यं च यतेर्यस्य परिग्रहः॥
तादृशं कल्मषं दृष्ट्वा सचैलोजलमाविशेत्॥ ३४॥
आरूढपतितोहन्ति दशपूर्वान् दशापरान् ॥

निस्तारयति तानेव योहि सम्यग् व्यवस्थितः ३५

स्मृत्यन्तरे ।

संन्यासी योहि भूत्वा तु हिरण्यं सङ्ग्रहेद्यदि ॥
तस्य दर्शनमात्रेण सचैलं जलमाविशेत् ॥ ३६ ॥

वसिष्ठोपि । न शब्दशास्त्राभिरतस्य मोक्षो, न चापि लोकसङ्ग्रहणे रतस्य ॥ न भोजनाच्छादनतत्परस्य, न चापि रम्यावसथप्रियस्य ॥३७॥

भागवते । योषिद्धिरण्याभरणाम्बरादि, द्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या, पतंगवन्नश्यति नष्टदृष्टिः ॥ ३८ ॥

विवेकचूडामणौ ।

शरीरपोषणार्थी सन् यआत्मानं दिदृक्षति ॥
ग्राहं दारुधिया धृत्वा नदीं तर्तुं सगच्छति ॥३९॥

आपातवैराग्यवतोमुमुक्षून्, भवाब्धिपारं प्रतियातुमुद्यतान् ॥आशाग्रहोमज्जयतेऽन्तराले, निगृह्य कण्ठे विनिवर्त्य वेगात् ॥ ४० ॥

( यतः निषिद्धकर्माणि वन्धकराणि तथा पतनहेतूनाह )

संन्यासोपनिषदि ।

एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ॥
ताम्बूलाभ्यञ्जने क्रीडा भोगाऽऽकाङ्क्षा रसायनम्
कत्थनं कुत्सनं स्वस्ति ज्योतिश्च क्रयविक्रयम् ॥
क्रिया कर्म विवादश्च गुरुवाक्यविलङ्घनम् ॥ ४२ ॥
सन्धिश्च विग्रहो यानं मञ्चकं शुक्लवस्त्रकम् ॥
विषं चैवाऽऽयुधं वीजं हिंसां तैक्ष्ण्यं च मैथुनम् ४३
त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ॥
गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ॥ ४४ ॥
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ॥ ४५ ॥
स्थावरं जंगमं वीजं तैजसं विषमायुधम् ॥
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥ ४६ ॥
विष्णुः । सम्भाषणं सह स्त्रीभिरालम्भप्रेक्षणे तथा ॥
नृत्यं गानं सभासेवां परिवादांश्च वर्जयेत् ॥ ४७ ॥
अंगिराः । प्रतिग्रहं न गृह्णीयान्न चैवान्यं प्रदापयेत् ।

प्रेरयेद्वा तथा भिक्षुर्न स्वप्नेपि कथंचन ॥ ४८ ॥
भाग. । नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम्
वादवादांस्त्यजेत्तर्कान् पक्षं कञ्चन संश्रयेत् ॥ ४६ ॥
क्रतुः । पुष्पशाखापल्लवं च फलमूलतृणादिकम् ॥
भुञ्ज्याद्धि यस्तु संन्यासी नरके पतति ध्रुवम् ५०
अत्रिः । न चैकस्मिन् वसेद्ग्रामे न चैकस्मिन् सरित्तटे
न रात्रौ न च मध्याह्ने सन्ध्ययोर्नैव पर्यटेत् ॥ ५१ ॥
नारदः । गायनं नर्त्तनं चैव वादित्रादिसनाद्यकम् ॥
हास्यं लाप्यं मैथुनं च सोयतिर्नरकं व्रजेत् ॥ ५२ ॥
एकान्नी द्विव्रती चैव भेषजी वस्तुसङ्ग्रही ॥
चत्वारो नरकं यान्ति मनुस्वायम्भुवोब्रवीत् ५३
चत्वारि पतनीयानि यतीनां मनुरब्रवीत् ॥
औषधं सन्निधानं च एकान्नं कांस्यभाजनम् ५४
द्रव्यस्त्रीपरदुःखानि तथा शूद्रप्रतिग्रहात् ॥
दम्भोदर्पोभिमानश्च यतीनां पतनानि षट् ॥ ५५ ॥
दक्षः । एकोभिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम् ॥

त्रयो ग्रामः समाख्यातऊर्ध्वं तु नगरायते ॥ ५६ ॥
नगरं हि न कर्तव्यं ग्रामो वा मिथुनं तथा ॥
एतत् त्रयं तु कुर्वाणः स्वधर्माच्च्यवते यतिः ५७
राजवार्तादि तेषां तु भिक्षावार्ता परस्परम् ॥
स्नेहपैशुन्यमात्सर्यं सन्निकर्षादसंशयम् ॥ ५८ ॥
लाभपूजानिमित्तं हि व्याख्यानं शिष्यसङ्ग्रहः ॥
एते चान्ये च बहवः प्रपञ्चास्तु तपस्विनाम् ५६
अत्रिः।मञ्चकं शुक्लवस्त्रं च स्त्रीकथालौल्यमेव च॥
दिवास्वापं च यानं च यतीनां पतनानि षट् ६०
आसनं पात्रलोपश्च सञ्चयः शिष्यसङ्ग्रहः॥
दिवास्वापो वृथा जल्पो यतेर्बन्धकराणि षट् ६१
संन्यासोपनिषदि ।
वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम् ॥
उक्ताऽलाब्वादिपात्राणामेकस्यापीह सङ्ग्रहः ६२
यतेस्सव्यवहाराय पात्रलोपस्स उच्यते ॥
गृहीतस्य तु दण्डाऽऽदेर्द्वितीयस्य परिग्रहः॥६३॥

कालान्तरोपभोगार्थं सञ्चयः परिकीर्तितः ॥
शुश्रूषा लाभपूजार्थं यशोऽर्थं वा परिग्रहः ॥ ६४॥
शिष्याणां न तु कारुण्याच्छिष्यसङ्ग्रहईरितः ॥
विद्यादिवाप्रकाशत्वादविद्यारात्रिरुच्यते ॥६५॥
विद्याऽभ्यासे प्रमादोयस्सदिवास्वापउच्यते ॥
अध्यात्मिकीं कथ मुक्त्वा भिक्षावार्तां विनातथा
अनुग्रहं परिप्रश्नं वृथाजल्पोऽन्यउच्यते ॥ ६६ ॥

वेदान्तसंज्ञायाम् ।

रागद्वेषकामक्रोधलोभमोहमदमात्सर्य्येर्ष्यासूयादम्भदयाहंकारेच्छाभक्तिश्रद्धाइति रागादि षोडशकम् । एतेषां मध्ये भक्तिश्रद्धे मुक्तिहेतू इच्छा तु मुक्तेर्हेतुर्बन्धहेतुश्च भवति अन्ये बन्धहेतवः ६७

श्रुतिः सुजीर्णोऽपि सुजीर्णासु विद्वांस्त्रीषु न विश्वसेत्
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ६८

मेधातिथिः ।

न सम्भाषेत् स्त्रियं काञ्चित् पूर्वदृष्टां न च स्मरेत्॥
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि॥६६॥

दत्तात्रेयोपि ।

मनसा कर्मणा वाचा त्यज्यतां मृगलोचने ॥
न ते स्वर्गोऽपवर्गोवा सानन्दं हृदयं यदि ॥७०॥
अग्निकुण्डसमा नारी घृतकुम्भसमोनरः ॥
संसर्गेण विलीयेत तस्मात्तां परिवर्जयेत् ॥७१॥
गौडी माध्वी तथा पैष्ठी विज्ञेया त्रिविधा सुरा ॥
चतुर्थी स्त्री सुरा ज्ञेया ययेदं मोहितं जगत्॥७२॥
मद्यपानं महापापं नारीसंगस्तथैव च ॥
तस्माद्द्वयं परित्यज्य तत्त्वनिष्ठोभवेन्मुनिः॥७३॥
तत्र मुग्धारमन्ते च सदेवासुरमानवाः ॥
ते यान्ति नरकं घोरं सत्यमेव न संशयः ॥ ७४॥

अथ कर्तव्यानि कर्माणि अप्याह ॥ अत्रिः ।

मौनं योगासनं योगस्तितिक्षैकान्तशीलता ॥
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ॥७५॥
पराशरः।ब्रह्मचर्यमहिंसा च सत्यमस्तेयमार्जवम्॥
वेदान्तश्रवणं ध्यानं भिक्षोः कार्याणि नित्यशः॥
अन्यच्च। शिखासूत्रपरित्यागोवेदान्तश्रवणं विना॥

विद्यमानेऽपि संन्यासे पतत्येव न संशयः ॥७७॥
द्रव्याणामप्यनादानमापद्यपितथेच्छया ॥
अपरिग्रहइत्याहुस्तत् प्रयत्नेन पालयेत् ॥ ७८ ॥
वसिष्ठः।सन्तोषः परमोलाभः सत्संगः परमा गतिः
विचारः परमं ज्ञानं शमोहि परमं सुखम् ॥ ७६ ॥
निःसंगता मुक्तिपदं यतीनां, संगादशेषाः
प्रभवन्ति दोषाः ॥ आरूढयोगोऽपि निपात्यतेऽधः,
संगेन योगी किमुताल्पसिद्धिः ॥ ८० ॥
दक्षः।ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलत
भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥८१॥
मनुः।एकएव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ॥
सिद्धिमेकस्य संपश्यन्न जहाति न हीयते॥८२॥
अनग्निरनिकेतः स्याद् ग्राममन्नार्थमाश्रयेत् ॥
उपेक्षकोऽसंकसुकोमुनिर्भावसमाहितः ॥ ८३ ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥
कालमेव प्रतीक्षेत निर्देशं भृतकोयथा ॥ ८४ ॥

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ८५ ॥
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ॥
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥८६॥
क्रुध्यन्तं न प्रतिक्रुद्धयेदाक्रुष्टः कुशलं वदेत् ॥
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥८७॥
अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः ॥
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ८८ ॥
यार्ज्जव-सत्यमस्तेयमक्रोधोह्रीः शौचं धीर्धृतिर्दमः
संयतेन्द्रियता विद्या धर्मः सर्वउदाहृतः ॥८६ ॥
संनिरुद्धयेन्द्रियग्रामं रागद्वेषौ प्रहाय च ॥
भयं हित्वा च भूतानाममृती भवति द्विजः॥६०॥
कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ॥
ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च६१
आवेक्ष्यागर्भवासाश्च कर्मजागतयस्तथा ॥
आधयोव्याधयाःक्लेशा जरारूपविपर्ययः॥६२ ॥

भवोजातिसहस्रेषु प्रियाप्रियविपर्ययः ॥
ध्यानयोगेन संपश्येत्सूक्ष्म आत्मात्मनिस्थितः ६३
नाश्रमः कारणं धर्मे क्रियमाणोभवेद्धि सः ॥
अतोयदात्मनोपथ्यंपरेषां न तदाचरेत् ॥ ६४ ॥
मनुः।दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ॥
समः सर्वेषु भूतेषु न लिंगं धर्मकारणम् ॥ ६५ ॥

अथयतिभेदाः ॥ संन्यासोपनिषदि

वैराग्यसंन्यासी ज्ञानसंन्यासी ज्ञानवैराग्यसंन्यासी कर्मसंन्यासीति चातुर्विध्यमुपागतः ६६ तद्यथेति दृष्टाऽऽनुश्रविकविषयवैतृष्ण्यमेत्यप्राक्पुण्यकर्मविशेषात्संन्यस्तस्सवैराग्यसंन्यासी॥ ६७॥ शास्त्रज्ञानात् पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतोदेहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्रवृत्तिं सर्वं हेयं मत्वा साधन चतुष्टयसम्पन्नो यस्संन्यस्यति सएव ज्ञानसंन्यासी ॥ ६८ ॥ क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवै-

राग्याभ्यां स्वरूपानुसन्धानेन देहमात्रावशिष्टस्सं-
न्यस्यजातरूपधरोभवति सज्ञानवैराग्यसंन्यासी॥
९९॥ब्रह्मचर्यंसमाप्य गृहीभूत्वा वानप्रस्थाश्रममेत्य
वैराग्याभावेऽप्याश्रमक्रमानुसारेण यस्संन्यस्यति
सकर्मसंन्यासी ॥ १०० ॥

अथान्तरे। विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचरः १०१
शक्तोबहूदके तीव्रतरायां हंससंज्ञिते ॥
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने ॥ २ ॥

तत्र कुटीचरस्य वृत्तिविशेषमाह ॥ संन्यासोपनिषदि ।

कुटीचकश्शिखायज्ञोपवीतीदण्डकमण्डलुधरः
कौपीनशाटीकन्थाधरः पितृमातृगुर्वाधानपरः पि-
ठरखनित्रशिक्याऽऽदिमात्रसाधनपरएकत्रान्नाद-
नपरश्श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः ॥३॥

भिक्षुकोपनिषदि ।

कुटीचकोनाम गौतमभरद्वाजयाज्ञवल्क्यवसि-

छ्मभृतयोऽष्टौ ग्रासांश्चरन्तोयोगमार्गे मोक्षमेव प्रा-
र्थयन्ते ॥ ४ ॥ प्रजापतिः कुटीचरोनाम स्वगृहे
वर्तमानश्शुचिरकलुषः आहिताग्निषु भिक्षां भु-
ञ्जानोऽपगतकामक्रोधलोभमोहाहंकारस्त्वर्जितआ-
त्मानुग्रहं कुरुते ॥ ५ ॥

पराशरः पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि
तदुपान्तकुटीस्थोयः सभैक्ष्यवृत्तिभुग्द्विजः॥ ६॥
प्रतिचार्यकृतः सोपि योवासः पूतवारिपः॥
कन्थात्रिदण्डभृच्चान्तआत्मज्ञः स कुटीचरः॥७॥

विष्णुस्मृतौ ।

अपत्येषु वसेन्नित्यं ममत्वं यत्नतस्त्यजेत् ॥
नान्यस्य गेहे भुञ्जीत भुञ्जानोदोषभाग्भवेत्८

अथ वहूदकस्य वृत्तिविशेषमाह ॥ संन्यासोपनिषदि ।

वहूदकाश्शिखाऽऽदिकन्थाधरस्त्रिपुण्ड्रधारी कुटी-
चकवत्सर्वसमोमधुकरवृत्त्याऽष्टकवलाशी ॥ ६ ॥

भिक्षुकोपनिषदि ।

वहूदकानाम त्रिदण्डकमण्डलुशिखायज्ञोपवी-

तत्काषायवस्त्रधारिणोब्रह्मर्षिगृहे मधुमांसंवर्जयित्वाऽष्टौ ग्रासान् भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेव प्रार्थयन्ते ॥ १० ॥

स्कन्दः।वहूदकस्तु संन्यस्य बन्धुपुत्रादिवर्जितः॥
सप्तागारं चरेद्भैक्ष्यमेकान्नं च परित्यजेत् ॥११॥
गोबालरज्जुसंबन्धं त्रिदण्ड्यं शिक्यमुद्धृतम् ॥
जलपात्रं पवित्रं च खनित्रं च कृपाणिकाम् ॥
शिखायज्ञोपवीतं च देवताराधनं चरेत् ॥ १२ ॥
पराशरः।ज्ञेयोवहूदकोनाम यः पवित्रितपादुकः ॥
शिखासनोपवीतानि धातुकाषायवस्त्रभृत्॥ १३ ॥
साधुवृत्तिर्द्विजौकस्सु भिक्षाभागात्मचिन्तकः ॥
वहूदकस्त्वयं ज्ञेयोयः परिव्राट् त्रिदण्डभृत् ॥१४॥

अथहंसवृत्तिः ॥ संन्यासोपनिषदि ।

हंसोजटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधूकरान्नाशी कौपीनखण्डतुण्डधारी ॥१५॥

भिक्षुकोपनिषदि ।

हंसान्नाम ग्रामैकरात्रं नगरे पञ्चरात्रं क्षेत्रे स-

क्षरात्रं तदुपरि न वसेत्॥ गोमूत्रगोमयाऽऽहारिणो-
नित्यं चान्द्रायणपरायणायोगमार्गे मोक्षमेव प्रा-
र्थयन्ते ॥ १६ ॥

स्कन्दपु०।हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च
कन्थाकौपीनमाच्छाद्यमंगवस्त्रं वहिः पटम्॥ १७॥
एकं वैणवं दण्डं धारयेन्नित्यमादरात् ॥
देवतानामभेदेन कुर्याद्ध्यानं समर्चयेत् ॥१८॥
विष्णुः।यज्ञोपवीतं दण्डं च वस्त्रं जन्तुनिवारणम्॥
अयं परिग्रहोनान्योहंसस्य श्रुतिवेदिनः ॥ १९ ॥
पराशरः।एकदण्डधराहंसाः शिखोपवीतधारिणः॥
वार्याधारकराः शान्ताभूतानामभयप्रदाः॥ २०॥
वसन्त्येकक्षपां ग्रामे नगरे पञ्च शर्वरीः ॥
कर्षयन्तोव्रतैर्देहमात्मध्यानरताः सदा ॥ २१ ॥

अथ परमहंसवृत्तिः संन्यासोपनिषादि ।

परमहंसाश्शिखायज्ञोपवीतराहितः पञ्चगृहेषु
करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं

दण्डमेकशाटीधरोवा भस्मोद्धूलनपरस्सर्वत्यागी॥
भिक्षुकोपनिषादि ।

अथ परमहंसानाम संवर्तकारुणिश्वेतकेतुजडभरतदत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽष्टौग्रासांश्चरन्तोयोगमार्गे मोक्षमेव प्रार्थयन्ते ॥ वृक्षमूले शून्यगृहे श्मशानवासिनोवा॥ साम्बरोवा दिगम्बरोवा॥न तेषां धर्माधर्मौ लाभालाभौ शुद्धाशुद्धौ॥ द्वैतवर्जितास्समलोष्टाश्मकाञ्चनास्सर्ववर्णेषु भैक्षाऽऽचरणं कृत्वा सर्वत्राऽऽत्मैवेति पश्यन्ति ॥ अथ जातरूपधरानिर्द्वन्द्वानिष्परिग्रहाश्शुक्लध्यानपरायणाआत्मानिष्ठाप्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तश्शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाऽग्निहोत्रशालानदीपुलिनागिरिकन्दरकुहरकोटरनिर्झरस्थाण्डिले तत्र ब्रह्ममार्गे सम्यक् सम्पन्नाश्शुद्धमानसा परमहंसाऽऽचरणेनसंन्यासेनदेहत्यागं कुर्वन्तितेपरमहंसानामेति

स्कन्दपुराणे ।

कौपीनाच्छादनं वस्त्रं कन्थाशीतनिवारिणीम् ॥
अक्षमालां च गृह्णीयात् वैणवं दण्डमव्रणम् ॥ २४ ॥
माधूकरमथैकान्नं परहंसः समाचरेत् ॥
परहंसस्त्रिदण्डं च रज्जुगोबालानिर्मिताम् ॥
शिखायज्ञोपवीतं च नित्यं कर्म परित्यजेत् ॥ २५ ॥

कात्यायनः। परमहंसानाम एकदण्डधराः मुण्डाः कन्थाकौपीनवाससोऽव्यक्ताऽव्यक्तलिंगा अनुन्मत्ताउन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपात्रजलपवित्रपादुकासनशिखायज्ञोपवीतत्यागिनःशून्यागारदेवगृहवासिनोन तेषां धर्मोनाधर्मोवा न सत्यं नापि चानृतं सर्वसहाःसर्वसमाः समलोष्टाश्मकाञ्चनाःयथोपपन्नचातुर्वर्ण्ये भैक्षचर्याचरन्तआत्मानं मोक्षयन्ते ॥ २६ ॥

अत्रिः।कौपीनयुगलं कन्था दण्डमेकं परिग्रहः
यतेः परमहंसस्य नाधिकं तु विधीयते ॥ २७ ॥

जाबालोपनिषदुपरिशङ्करानन्दीटीकायां अध्यात्मपुस्तकेपि ग्राह्यम् ।

वसिष्ठोपि।संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत् वेदसंन्यासतः शूद्रस्तस्माद्वेदं न संन्यसेदिति २८

श्रुतिरप्याह ।

स्वरूपानुसन्धानव्यतिरिक्ताऽन्यशास्त्राभ्यासैरुष्ट्रकुङ्कुमभारवद्व्यर्थः॥ न योगशास्त्रप्रवृत्तिः॥ न सांख्यशास्त्राभ्यासः॥ न मन्त्रतन्त्रव्यापारः॥ नेतरशास्त्रप्रवृत्तिर्यतेरस्ति॥ अस्ति चेच्छवालङ्कारवत्कर्माचारविद्यादूरः॥ न परिव्राण्नाम संकीर्तनपरोयद्यत्कर्म करोति तत्तत्फलमनुभवति॥ एरण्डतैलफेनवत्सर्वं परित्यजेत्॥ न देवताप्रसादग्रहणम्॥ न वाह्यदेवाभ्यर्चनं कुर्यात्॥ स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याऽऽहारमाहरन् कृशी भूत्वा मेदोवृद्धिमकुर्वन् विहरेदिति॥२६॥

यत्तु शिखोपवीतादित्यागनिषेधाःते कुटीचकादिपराः

यत्तु मेधातिथिः ।

यावन्न स्युस्त्रयोदण्डास्तावदेकेन वर्तयेत्॥

तदपि तत्परमेव ॥ यच्चात्रिः ।

चतुर्धा भिक्षवः प्रोक्ताः सर्वे चैव त्रिदण्डिनः ॥

इति तद्वाग्दण्डादिपरम् न यष्टिपरम् ॥

वाग्दण्डोथ मनोदण्डः कर्मदण्डस्तथैव च ॥

यस्यैते नियतादण्डाः सत्रिदण्डीति चोच्यते ३०

इतिमनूक्तेः ।

तस्मात्परमहंसस्यैकदण्डएव ॥ सोप्यविदुषः ॥ विदुषस्तु सोपि नास्ति ॥ न दण्डं न शिखां नाच्छादनंचरति परमहंसः इति परमहंसोपनिषदुक्तेः ज्ञानमेवास्य दण्डः ॥ इति वाक्यशेषाच्च ॥

भगवानपि विदुषः कर्त्तव्यशून्यतामाह ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥

आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते इति॥

दक्षोपि।नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन॥

एतैः सर्वैः सुनिष्पन्नोयतिर्भवति नेतरः ॥३२॥

श्रुतिः।ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः॥

नैवास्ति किञ्चित्कर्तव्यमस्ति चेन्न सतत्त्ववित्

इति विविदिषोस्तु श्रवणमननादिकर्तव्यसद्भा-

वात् तदुपकारित्वेन दण्डधारणादिनियमउपपद्यते इति ॥ अतएव कौपीनाच्छादनदण्डस्वीकरणं वा उत्पन्ने ज्ञाने स्वीकृत्य पश्चात् परित्यजनमविदुषः इति सिद्धम् ॥

अथ दण्डविचारः ॥ श्रुतिः ।

सखा मागोपायेति दण्डं परिग्रहेत् ॥
दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् ॥
पुण्यस्थलसमुत्पन्नं नानाकल्मषशोधितम् ॥ ३४ ॥
अदग्धमहतं कीटैः पर्वग्रन्थि विराजितम् ॥
नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा विभृयाद्यतिः ३५
दण्डाऽऽत्मनोस्तु संयोगस्सर्वथातु विधीयते॥
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥ ३६ ॥

पराशरः । शंखः ।

न दण्डैर्न च मौनेन शून्यागाराश्रयेण च ॥
यतिःसिद्धिमवाप्नोति योगेनाप्नोत्यनुत्तमम् ॥ ३७ ॥
पराशरः।न दण्डैर्न च दण्डेन विना वातेन वा तथा
मोक्षावाप्तिर्भवेत्पुंसां किन्तु साध्यात्मचिन्तनात् ३८
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

विष्णुः। अन्नार्थं लिङ्गमुद्दिष्टं न मोक्षार्थमिति स्थितिः

शङ्करानन्दीटीकायाम् ।

गोसर्पादेर्दर्शनेन दमनहेतुभूतमेकं वैणवम् ॥

चरकसूत्रम्। शौचादानहेतोर्जलकुण्डिका ॥ ४० ॥

दण्डधारणं भैक्षचर्यार्थम् ॥ ४१ ॥

दण्डग्रहणाधिकारीलक्षणमाह ।

अध्यात्मयोगयुक्तस्तु ब्रह्मप्राप्त्यभिलाषुकः ॥

जितेन्द्रियोहि दण्डार्होयुवा न स्यात्तथा सरुक् ४२

युवा नीरुक्तथा भिक्षुरात्मवृद्धिप्रदूषकः ॥

कालिकापुराणे ।

कायजाये बुधैर्नित्यं नृणां पापविमोक्षणात् ॥

जितेन्द्रियैर्जितक्रोधैर्धार्यावै तत्त्वदर्शिभिः ॥ ४३ ॥

संन्यासोपनिषदि । चत्वारिंशत्संस्कारसम्पन्नस्सर्वतोविरक्तश्चित्तशुद्धिमेत्याऽऽशाऽसूयेर्ष्याहंकारं दग्ध्वा साधनचतुष्टयसम्पन्नएव संन्यस्तुमर्हति ॥ ४४ ॥

संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ॥

सकुर्यात्कृच्छ्रमात्रं तु पुनस्संन्यस्तुमर्हति ॥४५॥
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ॥
संन्यासविघ्नकर्त्ता च त्रीनेतान्पतिता न्विदुः ४६

अनाधिकारीलक्षणमाह ॥ तत्रैव ।

अथ षण्डः पतितोऽङ्गविकलः स्त्रैणोवाधिरोऽर्भकोमूकः॥ पाषण्डश्चक्री लिंगी कुष्ठी वैखानसहरद्विजौ भृतकाऽध्यापकश्शिपिविष्टोऽनाग्निकोनास्तिकोवैराग्यवन्तोऽप्येते न संन्यासाऽर्हाः ॥
संन्यस्ताऽयद्यपि महावाक्योपदेशे नाधिकारिणः ॥
आरूढपतिताऽपत्यं कुनखी श्यावदन्तकः॥
क्षीवस्तथाऽङ्गविकलोनैव संन्यस्तुमर्हति ॥४७॥
सम्प्रत्यवासितानां च महापातकिनां तथा ॥
व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत ४८
व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् ॥
सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत् ॥
एते नार्हन्ति संन्यासमातुरेण विना क्रमम्॥ ४९॥

अन्यच्च। धर्मलोपेऽप्यनुतापवतस्तत् प्रायश्चित्त-
वेनसंन्यासः सम्भवति ॥

तथा च स्मृत्यन्तरम् ।

ये च सन्तानजादोषाये च स्युः कर्मसम्भवाः ॥
संन्यासस्तान्दहेत्सर्वांस्तुषाऽग्निरिव काञ्चनम्॥
यमोपि। पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत्॥
वनस्थोधूतपापोवा परं पन्थानमाश्रयेत् ॥५१ ॥

अथ पात्रविचारः ॥ श्रुतिः ।

मत्पात्रं वाऽलाबुपात्रं दारुपात्रं वा ॥
मनुः। अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे॥५२॥
अलाबुं दारुपात्रं च मृन्मयं वैदलं तथा ॥
एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत्५३
परा। मृद्वेणुदार्वलाब्वश्ममयं पात्रं यतेः स्मृतम्॥
शुद्धिरद्भिरमीषां तु गोबालैश्चावघर्षणम् ॥५४ ॥
अत्रिः। सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ॥

भिक्षादातुर्न धर्मोऽस्ति भिक्षुर्भुंक्ते तु किल्बिषम् ५५
न च कांस्येषु भुञ्जीयादापद्यपि कदाचन ॥
मलाशाः सर्वएवैते यतयः कांस्यभोजनाः॥५६॥
श्वकाकगर्दभैरुष्ट्रैर्जम्बुकैर्वानरैस्तथा ॥
चाण्डालपतितैः स्पृष्टं यतिपात्रं विसर्जयेत्॥५७॥
ग्रन्थान्तरे।पूयशोणितमांसैस्तु स्पृष्टं मूत्रपुरीषयोः
श्लेष्माश्रुतेन संस्पृष्टं यतिः पात्रं परित्यजेत्॥५८॥

नारायणीटीकायाम् ।

हिरण्मयानि पात्राणि कृष्णायसमयानि च ॥
यतीनां तान्यपात्राणि वर्जयेत्तानि भिक्षुकः॥५९
हारीतः।वटकाश्वत्थपर्णेषु कुम्भीतैन्दुकपात्रके॥
कोविदारकदम्बेषु न भुञ्जीयात् कदाचन॥६०॥
ग्रन्थान्तरे। उत्तमं मृण्मयं पात्रं मध्यमस्तुअलाबुकम्
कनिष्ठदारुपात्रं च वैणवं च तथैव च ॥ ६१ ॥
आदौ मुखे तथा पृष्ठे मध्यनालं ततः परम्॥

१ अगस्त्य ।

संप्रोक्षणं च विधिना पात्रशुद्धिस्तुउत्तमा ॥ ६२॥
सुपक्वं मृन्मयं कुम्भं कृष्णचन्द्रविवर्जितम् ॥
चतुर्विंशाङ्गुलं चोर्ध्वं विस्तारेण च षोडशम् ॥ ६३॥
चतुरङ्गुलग्रीवं च मुखं तस्य षडांगुलम् ॥
कण्ठाच्चतुरंगुलं त्यक्त्वा छिद्रं तत्र प्रकल्पयेत् ६४
गृध्रवायसपक्षीणां श्वानमार्जारगर्दभैः ॥
एलमूषकसर्पाणां राजमार्गं च हाटकैः॥ ६५॥
नौकायां शौचमूत्रे च पात्रस्पर्शं यदा भवेत् ॥
तदा कुर्वीत यत्नेन पात्रशुद्धिं यथाविधि ॥ ६६॥
शताष्टोत्तरं जप्त्वा तु प्रणवं मृज्जलेनाशु ॥
संप्रोक्ष्य ततः पश्चात् दर्शयेद्धेनुमुद्रया ॥ ६७॥

अथ भिक्षाविचारः ॥ भिक्षाप्रशंसा ॥ श्रुतिः ।

नक्ताद्वरश्चोपवास उपवासादयाचितः ॥
अयाचिताद्वरं भैक्षं तस्माद्भैक्षेण वर्तयेत् ॥ ६८॥
यमः।न भैक्षं परपाकान्नं न च भैक्षं प्रतिग्रहः ॥
सोमपानं समं भैक्षं तस्माद्भैक्षेण वर्त्तयेत् ॥ ६९॥

भिक्षाहारो निराहारो भिक्षा नैव प्रतिग्रहः ॥
सदन्नं वा कदन्नं वा सोमपानं दिने दिने ॥७०॥
शातातपः। भिक्षा माधूकरी नाम सर्वपापप्रणाशिनी।
अवधूतश्च पूतश्च सोमपानं दिने दिने॥ ७१ ॥
गङ्गायाः सलिलं पुण्यं शालग्रामशिला तथा॥
भिक्षान्नं पञ्चगव्यं च पवित्राणि युगे युगे ७२
कण्वः। आब्विन्दुं यः कुशाग्रेण मासि मासि समश्नुते
निरपेक्षस्तु भिक्षाशी स तु तस्माद्विशिष्यते॥७३॥

भिक्षाविधिः ॥ श्रुतिः ।

पञ्चसप्तगृहाणां तु भिक्षामिच्छेत्क्रियावताम् ॥
गोदोहमात्रमाकांक्षेन्निष्क्रान्तो न पुनर्व्रजेत ॥
निरीक्षन्ते त्वनुद्विग्नास्तद्गृहं यत्नतो व्रजेत्॥७४॥
नैव सव्याऽपसव्येन भिक्षाकाले विशेद्गृहान् ॥
नातिक्रामेद्गृहं मोहाद्यत्र दोषो न विद्यते॥७५॥
श्रोत्रियान्नं न भिक्षेत श्रद्धाभक्तिबहिष्कृतम् ॥
व्रात्यस्यापि गृहे भिक्षेच्छ्रद्धाभक्तिपुरस्कृते॥७६॥

आत्मसंमितमाहारमहरेदात्मवान् यतिः ॥
पात्रमस्य भवेत्पाणिस्तेन नित्यं स्थितिं नयेत् ७७
पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् ॥
परार्थं न प्रतिग्राह्यं न दद्याच्च कथंचन ॥७८॥
मनुः। एककालं चरेद्भैक्षं न प्रसज्जेत विस्तरे ॥
भैक्षे प्रसक्तोहि यतिर्विषयेष्वपि सज्जति॥७९॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ॥
प्राणयात्रिकमात्रः स्यान्मात्रासंगाद्विनिर्गतः ८०
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः ॥
अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते ॥८१॥

अथ भिक्षाकालः ॥ श्रुतिः ।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ॥
कालेपराह्णे भूयिष्ठे भिक्षाचरणमाचरेत् ॥ ८२॥

अथ भिक्षा पञ्चविधा ॥ श्रुतिराह ।

माधूकरमसंक्लप्तं प्राक् प्रणीतमयाचितम् ॥
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ८३

मनस्संकल्परहितांस्त्रीन् गृहान् पञ्च सप्त वा ॥
मधुमक्षिकवत्कृत्वा माधूकरमिति स्मृतम् ॥८४॥
प्रातःकाले च पूर्वेद्युर्यद्भक्तैः प्रार्थितं मुहुः॥
तद्भैक्षं प्राक् प्रणीतं स्यात्स्थितिं कुर्यात्तथापि वा॥
भिक्षाटनसमुद्योगाद्येन केन निमन्त्रितम् ॥
अयाचितं तु तद्भैक्षं भोक्तव्यं च मुमुक्षुभिः ८६
उपस्थानेन यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन तत् ॥
तात्कालिकमिति ख्यातं भोक्तव्यं यतिभिस्तदा॥
सिद्धमन्नं यदानीतं ब्राह्मणेन मठं प्रति ॥
उपपन्नमिति प्राहुर्मुनयोमोक्षकांक्षिणः ॥ ८८ ॥
याचिताऽयाचिताभ्यां च भिक्षाभ्यांकल्पयेत्स्थितिम्
न वायुस्पर्शदोषेण नाग्निदहनकर्मणा ॥
नापोमूत्रपुरीषाभ्यां नान्नदोषेण मस्करी ८७

अथ भोजनविधिः ॥ हारीतः ।

पात्रं वामकरे स्थाप्य दक्षिणेन तु शोषयेत् ॥
यावतान्नेन तृप्तिः स्यात्तावद्भैक्षं समाचरेत् ९०

ततोनिवृत्य तत्पात्रं संस्थाप्यान्यत्र संयमी ॥
चतुर्भिरंगुलैश्छाद्यग्रासमात्रं समाहितः ॥ ६१ ॥
सर्वव्यञ्जनसंयुक्तं पृथक् पात्रे नियोजयेत् ॥
सूर्यादिभूतदेवेभ्योदत्त्वा संप्रोक्ष्य वारिणा ॥
भुञ्जीत पात्रपुटके पात्रे वा वाग्यतोयतिः॥६२॥

निर्णयसिन्धौ। उदयमिति चतसृभिरादित्यमुपस्थाय। तेनैक्यं ध्यात्वा॥ आकृष्णेनेति प्रदक्षिणंकृत्वा ॥ ये ते पन्थानः इति जप्त्वा ॥ योसौ विष्ण्वाख्यआदित्ये पुरुषोन्तर्हृदिस्थितः ॥
सोहं नारायणोदेवः॥ इति ध्यात्वा प्रणम्य तम् ॥
त्रिदण्डं दक्षिणे त्वङ्गे ततः सन्धाय वाहुना ॥
पात्रं वामकरे क्षिप्त्वा श्लेषयेद्दक्षिणेन तु ॥ ६४ ॥

अथ वर्ज्यभिक्षामाह ॥ मदरत्ने आत्रः ।

पित्रर्थं कल्पितं पूर्वमन्नं देवादिकारणात् ॥
वर्जयेत्तादृशीं भिक्षां परबाधाकरीं तथा ॥ ६५ ॥
नारदः।हव्यंकव्यंचराजेन्द्रनाश्नीयादात्मवान्यतिः
हव्यकव्यपरोभिक्षुः पतत्येव न संशयः ॥ ६६ ॥

बृहस्पतिरपि ।

श्रवणं मननं ध्यानं स्वाध्यायोज्ञानमेव च ॥
सद्योनश्वरतां यातिसकृच्छ्राद्धान्नभोजनात्॥६७॥
अत्रिः।द्वावेवाश्रमिणौभोज्यौ वानप्रस्थौ गृहीतथा
अभोज्यमन्नमन्येषां सर्वेषामपि लिंगिनाम् ॥
व्यासः।यत्यन्नं नैव भोक्तव्यं प्राणैःकण्ठगतैरपि।
गोमांसस्य समं ज्ञेयं सुराविन्दुसमं जलम्॥६६ ॥
यमः।यत्यन्नं यतिपात्रस्थं यतिना प्रेरितच यत ॥
अन्नत्रय न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्॥
वृहस्पतिः।यत्यन्नं ब्रह्मचर्यान्नमवरान्नं तथैव च।
शूद्रान्नं च तथा भिक्षुर्वर्जयेत्परदारवत्॥१०१॥

विश्वामित्रः।

एकस्यान्नं त्र्यहं भुक्त्वा निरन्तरमनापदि ॥
प्राणायामशतं कुर्याच्छुद्ध्यर्थं यतिरात्मवान्॥२॥
पराशः।यतीनामातुराणां च वृद्धानांदीर्घरोगिणाम्
एकान्ननैव दोषोऽस्ति एकस्यापि दिने दिने॥३॥
अत्रिः।ज्ञातीनां च कुले भिक्षुर्न भिक्षेत कथंचन ॥

आचरेच्च यदा भिक्षां तदा चान्द्रायणं चरेत् ॥४॥
सगोत्रमसगोत्रं वा यद्गृहे सूतकं भवेत् ॥
भिक्षां चेद्भिक्षुर्भिक्षेत भुक्त्वा चान्द्रायणं चरेत ५
शौनकः।पञ्चाहं सप्तरात्रं वा यत्र भिक्षा न लभ्यते
तद्गृहं वर्जयेद्भिक्षुश्चाण्डालगृहवत्सदा ॥ ६ ॥

जमदग्निः ।

श्वकाककोडवेष्याविखरोष्ट्रं स्पर्शयेद्यातिः ॥
सभिक्षस्तु जले मग्नः शुद्ध्येज्जप्त्वाघमर्षणम् ७॥

ग्रन्थान्तरे ।

देहि देहीति योब्रूयात् लवणं व्यञ्जनादिकम् ॥
गोमांसतुल्यं तद्भैक्षं भुक्त्वा चान्द्रायणं चरेत् ॥८॥
श्रुतिः।अभिशस्तं च पतितं पाषण्डं देवपूजकम् ॥
वर्जयित्वा चरेद्भैक्षं सर्ववर्णेषु चापदि ॥ ९ ॥
घृतं श्वमूत्रसदृशं मधु स्यात्सुरया समम् ॥
तैलं सूकरमूत्रं स्यात्सूपं लशुनसम्मितम् ॥ १० ॥
माषापूपादि गोमांसं क्षीरं मूत्रसमं भवेत् ॥
तस्मात्सर्वप्रयत्नेन घृतादीन्वर्जयेद्यातिः ॥ ११ ॥

घृतसूपादिसंयुक्तमन्नं नाद्यात्कदाचन ॥
पात्रमस्यभवेत्पाणिस्तेन नित्यं स्थितिं नयेत् १२

आज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धलेपनमिव क्षारमन्त्यजामिव वस्त्र-मुच्छिष्टपात्रमिवाभ्यंगं स्त्रीसंगमिव मित्राऽऽह्ला-दकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं च-ण्डालवाटिकामिव स्त्रियमहिमिव सुवर्णं कालकूट-मिव सभास्थलं श्मशानस्थलमिव राजधानीं कु-म्भीपाकमिव शवपिण्डवदेकत्रान्नं न देवतार्चनं प्रपञ्चवृत्तिं परित्यज्य जीवन्मुक्तो भवेत् ॥ १३ ॥

रथ्यायां वहुवस्त्राणि भिक्षा सर्वत्र लभ्यते ॥
भूमिः शय्यास्ति विस्तीर्णा यतयः केन दुःखिताः
मनुः।न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया॥
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् १५
न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः ॥
आकीर्णं भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् ॥ १६ ॥

श्रुतिः। विशीर्णवस्त्रं वल्कलं वा प्रतिगृह्णीयान्नान्यत्प्रतिगृह्णीयादिति ॥

मनुः। कपालं वृक्षमूलानि कुचैलमसहायता॥ १७॥

चरकसूत्रम्। कन्थासीवनहेतोः सूचीपिप्पलकम् १८

आरुणेय्युपनिषदि। वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् द्वावेव वा चरेत् ॥ १९ ॥

संन्यासोपनिषदि । चतुरो मासान्वार्षिकान् ग्रामे वा नगरे वाऽपि वसेत्॥ पक्षा वै मासा इति द्वौ मासौ वा वसेत् ॥ २० ॥

वृद्धयाज्ञवल्क्योपि ।

चौरैरुपद्रुतं देशं दुर्भिक्षव्याधिपीडितम् ॥
चक्रेणान्येन वाक्रान्तं वर्षास्वप्याशु सन्त्यजेत् २१

मात्स्ये ।

अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ॥
एकत्र चतुरो मासान् वार्षिकान्निवसेत्पुनः ॥
अविमुक्तप्रविष्टानां विहारस्तु न विद्यते ॥ २२ ॥

देवलः। स्त्रियं दृष्ट्वा यदा स्वप्ने रेतः क्षरति वै क्वचित्

सत्रासाः प्लुत्य शुद्धयर्थं कुर्यात् षोडश संयमान् २३

अथ यतेः श्रेष्ठत्वं पूज्यत्वं च ॥ जाबालः ।

चतुर्वेदी तु योविप्रः सोमयाजी शतक्रतुः ॥
तस्मादपि यतिः श्रेष्ठस्तिलपर्वतमन्तरम् ॥ २४॥
पुराणान्तरे। ब्रह्मचारी सहस्रं च वानप्रस्थशतत्रयम्
ब्राह्मणानां तु कोटिश्च यतिरेकोविशिष्यते ॥ २५॥

अश्वमेधिके ।

एकदण्डी त्रिदण्डी वा शिखामुण्डितएव वा ॥
काषायमात्रसारोपि यतिः पूज्योयुधिष्ठिर २६ इति

अथ मुमुक्षुत्वसम्पत्तये देहादौ दुःखादिनिरूपणम् ॥ पराशरः ।

मुमुक्षवोपि राजन्ते देहाद्देहादितोयथा ॥
शरीरज्ञास्तथा प्राहुः परब्रह्मलयं गमाः ॥ २७॥
स्वत्वाय्वगन्यं बुधात्रीभिरारब्धमाशुनाशि च ॥
तन्मुख्यगुणसंयुक्तं तत्पञ्चाक्षलयं त्यजेत् ॥ २८॥
शुक्रशोणितसंयोगात्स्त्रीकोष्ठपाकसंभवम् ॥
दुःखेन दशभिर्मासैर्नाहृतं भूरिदोहृदैः ॥ २९ ॥
जनन्या दौर्हृदाभावे गर्भस्यस्यापि दुःखिता ॥

अत्यन्तं जायमानस्य योनियन्त्रानिपीडनात ३०॥
जातस्य बालरोगाद्यैर्योगिनीग्रहदोषतः ॥
देहिनः सर्वदा दुःखं हतजन्मादिवैग्रहैः ॥ ३१ ॥
एवं बाल्येमहद्दुःखं मन्मथाद्यौवनेऽपि तत् ॥
स्त्रिया विनापि सार्धं वा दारिद्र्यैश्वर्ययोरपि ३२॥
क्षुत्तृड्भ्यां प्रथमे वित्तरक्षणाद्यैर्द्वितीयके ॥
वृद्धत्वे चानयोर्दुःखं तस्माद्दुःखमयं वपुः ॥३३॥
मांसेन लेपितं बद्धं स्नायुभिः कुल्यसंचयम् ॥
मीढमेहनसंपूर्णं कफापित्तवसाश्रितम् ॥ ३४ ॥
अमेध्यपूर्णभस्त्रावत्सर्वथा सर्वदा शुचिः ॥
तृष्णया स्नानगन्धाद्यैर्निर्गन्धी क्रियते बहिः ३५
दुर्गन्धं सर्वरन्ध्रेषु स्वघ्राणोद्वेगकारकम् ॥
सततं स्रवतेऽमेध्यं किं देहस्योच्यते शुभम् ॥३६॥

अथ योगसिद्ध्यर्थं कारणानि आह ॥ श्रुतिः ।

सवाएषएवं पश्यन्नेव मन्वानोविजानन्ना-
त्मरतिरात्मक्रीडआत्ममिथुनआत्मानन्दः सस्व-

राड् भवति अथयेऽन्यथाऽतोविदुरन्यराजानस्तेऽ
क्षय्यलोकाभवन्ति इति ॥ ३७ ॥

नायमात्मा प्रवचनेनन लभ्यो न मेधया न वहुना
श्रुतेन ॥ यमेवैषवृणुते तेन लभ्यस्तस्यैषआत्मा
विवृणुते तनूं स्वाम् ॥ ३८ ॥

नाविरतोदुश्चारितान्नाशान्तोनासमाहितः ॥
नाशान्तमानसोवापि प्रज्ञानेनैवमाप्नुयात् ॥३९॥
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः॥
न सतत्पदमाप्नोति संसारं चाधिगच्छति ॥४०॥
यस्तु विज्ञानवान् भवति समनस्कःसदा शुचिः॥
सतु तत्पदमाप्नोति यस्माद्भूयोन जायते ॥४१॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ॥
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ४२

न चक्षुषा गृह्यते नापि वाचा, नान्यैर्देवैस्तप-
सा कर्मणा वा ॥ ज्ञानप्रसादेन विशुद्धसत्त्वस्तत-
स्तु तं पश्यते निष्कलं ध्यायमानः॥ ४३ ॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्त-
पसोवाप्यलिङ्गात् ॥ गतैरुपायैर्यतते यस्तु विद्वां-
स्तस्यैषआत्मा विशते ब्रह्मधाम ॥ ४४ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगा-
द्यतयः शुद्धसत्वाः ॥ ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥ ४५ ॥

श्रद्धाभक्तिध्यानयोगादवेहि ॥ न कर्मणा न
प्रजया न धनेन त्यागेनैके आत्मतत्त्वमानशुः॥ ४६॥

स्मृतिरपि ।

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ४७॥
योऽन्तःसुखोन्तरारामस्तथान्तर्ज्योतिरेव च ॥
सयोगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥४८॥
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ॥
छिन्नद्वैधायतात्मानः सर्वभूतहिते रताः॥ ४९॥
कामक्रोधवियुक्तानां यतीनां यतचेतसाम्॥

अभितोब्रह्मनिर्वाणं वर्तते विदितात्मनाम्॥५०॥
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः॥
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति५१
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति॥
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ५२
नाहं वेदैर्न तपसा न दानेन न चेज्यया॥
शक्यएवं विधोद्रष्टुं द्रष्टवानसि मां यथा॥५३॥
भक्त्या त्वनन्यया शक्यअहमेवं विधोऽर्जुन॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥५४॥
मत्कर्मकृन्मत्परमोमद्भक्तः संगवर्जितः॥
निर्वैरः सर्वभूतेषु यः समामेति पाण्डव॥५५॥
अमानित्वमदाम्भित्वमहिंसा क्षान्तिरार्जवम्॥
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥५६॥
इन्द्रियार्थेषु वैराग्यमनहङ्कारएव च॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥५७॥
असक्तिरनभिष्वंगः पुत्रदारगृहादिषु॥

नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ५८ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ५९ ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥६०॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ॥
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥६१॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः॥
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥६३॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते॥६४॥
दक्षोपि नारण्यसेवनाद्योगो नानेकग्रन्थाच्चिन्तनात्॥
व्रतैर्यज्ञैस्तपोभिर्वा न योगः कस्यचिद्भवेत्॥६५॥
न च पथ्याशनाद्योगो न नासाग्रनिरीक्षणात् ॥

न च शास्त्रातिरिक्तेन शौचेन भवति क्वचित् ६६
न मन्त्रमौनकुहकैरनेकैः सुकृतैस्तथा ॥
लोकपात्रानियुक्तस्य योगोभवति कस्यचित् ६७
अभियोगात्तथाभ्यासात्तास्मिन्नैव तु निश्चयात् ॥
पुनः पुनश्च निर्वेदाद्योगः सिद्धयति नान्यथा ६८
आत्मचिन्ताविनोदेन शौचेन क्रीडनेन च ॥
सर्वभूतसमत्वेन योगः सिद्धयति नान्थथा ॥६९॥
यश्चात्मानि रतोनित्यमात्मक्रीडस्तथैव च ॥
आत्मानन्दस्तु सततं आत्मन्येव सुभावितः ७०
रतश्चैव सुतुष्टश्च सन्तुष्टोनान्यमानसः ॥
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिद्धयति ७१
चूडामणौ। न योगेन न सांख्येन कर्मणानो न विद्यया
ब्रह्मात्मैकत्वबोधेन मोक्षः सिद्धयति नान्यथा ७२
वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् ॥
वैदुष्यं विदुषां तद्वद्भुक्तये न तु मुक्तये ॥ ७३ ॥
अकृत्वा दृश्यविलयमज्ञात्वा तत्त्वमात्मनः ॥

बाह्यशब्दैः कुतोमुक्तिरुक्तिमात्रफलैर्नृणाम् ॥ ७४॥
अकृत्वा शत्रुसंहारमगत्वाखिलभूश्रियम् ॥
राजाहमिति शब्दान्नो राजा भवितुमर्हति॥ ७५॥
आप्तोक्तिं खननं तथोपरि शिलाद्युत्कर्षणं स्वीकृतं,
निक्षेपः समपेक्षते नहि बहिः शब्दैस्तु निर्गच्छति॥
तद्वद्ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते,
मायाकार्यतिरोहितं स्वममलं तत्त्वं न दुर्युक्तिभिः॥

मोक्षस्य हेतुः प्रथमो निगद्यते, वैराग्यमत्यन्तमनित्यवस्तुषु॥ ततः शमश्चापि दमस्तितिक्षा, न्यासः प्रसक्ताखिलकर्मणां भृशम् ॥ ७७ ॥

ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं नित्यनिरन्तरं मुनेः॥ ततोविकल्पं परमेत्य विद्वानिहैव निर्वाणसुखं समृच्छति ॥ ७८ ॥

योगस्य प्रथमद्वारं वाङ्निरोधोऽपरिग्रहः ॥
निराशा च निरीहा च नित्यमेकान्तशीलता ७६

अथयोगलक्षणम् ॥ दक्षः ।

विषयेन्द्रियसंयोगं केचिद्योगं वदन्ति वै ॥

अधर्मोधर्मबुद्ध्या तु गृहीतस्तैरपण्डितैः ॥ ८० ॥
आत्मनोमनसश्चैव संयोगं तु ततः परम् ॥
उक्तानामधिकाह्येते केवलं योगवञ्चिताः ॥ ८१ ॥
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ॥
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ८२
कषायमोहविक्षेपलज्जाशङ्कादिचेतसः ॥
व्यापारास्तु समाख्यातास्तान् जित्वा वशमानयेत् ॥
कुटुम्बैः पञ्चाभिर्ग्रामः षष्ठस्तत्र महत्तरः ॥
देवासुरैर्मनुष्यैश्च सजेतुं नैव शक्यते ॥ ८४ ॥
बलेन परराष्ट्राणि गृह्णञ्छूरस्तु नोच्यते ॥
जितोयेनेन्द्रियग्रामः सशूरः कथ्यते बुधैः ८५ ॥
बहिर्मुखानि सर्वाणि कृत्वा चाभिमुखानि वै ॥
मनस्येवेन्द्रियाण्यत्र मनश्चात्मनि योजयेत् ८६
सर्वभावविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् ॥
एतद्ध्यानं तथा ज्ञानं शेषस्तु ग्रन्थविस्तरः ॥ ८७

कठोपनिषादि ।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥

बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥८८॥
तांयोगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्॥
अप्रमत्तस्तदा भवति योगोहि प्रभवाप्ययौ॥८९॥

मैत्र्युपार्निषादि।

लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम्॥
यदा यात्यमनीभावं तदा तत्परमं पदम्॥९०॥
तावन्मनोनिरोद्धव्यं हृदि यावद्गतक्षयम्॥
एतज्ज्ञानं च मोक्षं च शेषान्ये ग्रन्थविस्तराः॥९१

अथ लयविक्षेपादिलक्षणम्॥ वेदान्तसंज्ञायाम्।

लयस्तावदखण्डवस्त्वऽनवलम्बनेनं चित्तवृत्ते-र्निद्रा॥ अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्य-लम्बनं विक्षेपः॥लयविक्षेपाभावेपि चित्तवृत्तेरागा-दिवासनयास्तम्भिभावादखण्डवस्त्वनवलम्बनं क-षायः॥ अखण्डवस्त्वऽनवलम्बनेपि चित्तवृत्तेः सविकल्पानन्दास्वादनं रसास्वादः॥ समाध्यार-म्भसमये सविकल्पानन्दास्वादनं वा॥इति॥९२॥

अथात्मलक्षणम् । बृहदारण्योपनिषदि । अ-
स्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमत-
मोऽवायवनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्र
मवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरवा-
ह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन॥६३

अथात्मोपनिषदि ॥ अथपरमात्मानाम ।

यथाक्षरमुपासनीयःसच प्राणायामप्रत्याहारस-
माधियोगानुमानाध्यात्माचिन्तकं वटकणिका-
श्यामाकतण्डुलोबालाग्रशतसहस्रविकल्पनादिभि-
र्न लभ्यते नोपलभ्यते॥ न जायते म्रियते न शु-
ष्यते न दह्यति न कंपते न भिद्यते नच्छिद्यते नि-
र्गुणः साक्षीभूतः॥ शुद्धोनिरवयवात्मा केवलः सू-
क्ष्मोनिष्कलोनिरञ्जनोनिराभिमानः शब्दस्पर्श-
रसरूपगन्धवर्जितोनिर्विकल्पोनिराकाङ्क्षः सर्व-
व्यापी सोऽचिन्त्योऽवर्ण्यश्चपुनात्यशुद्धान्यपूतानि
निष्क्रियःसंस्कारोनास्तिएषपरमात्मापुरुषोनाम॥

अथ माण्डूक्योपानिषादि ।

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञं अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमाचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते सआत्मा सविज्ञेयः ॥ ६५ ॥

केनोपानिषादि ।

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो नविद्मोन विजानीमोयथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि ॥ इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ६६ ॥

यद्वाचानभ्युदितं येन वागभ्युद्यते ॥
तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ॥ ६७ ॥
यन्मनसा न मनुते येनाहुर्मनोमतम् ॥
तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ॥ ६८ ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ॥

तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ॥ ६६ ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ॥
तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासित ॥१००॥
यत्प्राणेन प्राणिति येन प्राणः प्रणीयते ॥
तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासिते ॥ १ ॥

कठोपनिषदि ।

न जायते म्रियते वा विपश्चिन्नायं कुत-
श्चिन्न बभूव कश्चित्॥ अजो नित्यः शाश्वतोऽय-
म्पुराणोन हन्यते हन्यमाने शरीरे ॥२॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ॥
उभौ तौ न विजानीतोनायं हन्ति न हन्यते ३

अणोरणीयान्महतोमहीयानात्मास्य जन्तो-
र्निहितोगुहायाम्॥ तमक्रतुः पश्यति वीतशोको-
धातुः प्रसादान्महिमानमात्मनः ॥ ४ ॥
आसीनोदूरं व्रजति शयानोयाति सर्वतः ॥
कस्तम्मदामदं देवं मदन्योज्ञातुमर्हति ॥ ५ ॥

अशरीरं शरीरेष्वनवस्थेष्वनवस्थितम् ॥
महन्तं विभुमात्मानं मत्त्वा धीरोन शोचति॥ ६ ॥

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्य-
मगन्धवच्च यत् ॥ अनाद्यनन्तम्महतः परं ध्रुवं नि-
चाय्य तन्मृत्युमुखात् प्रमुच्यते ॥ ७ ॥

अग्निर्यथैको भुवनं प्रविष्टोरूपं रूपं प्रतिरूपो-
बभूव ॥ एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं
प्रतिरूपोवहिश्च ॥ ८ ॥

वायुर्यथैकोभुवनं प्रविष्टोरूपं रूपं प्रतिरूपोब-
भूव ॥ एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रति-
रूपोवहिश्च ॥ ९ ॥

सूर्योयथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षु-
षैर्वाह्यदोषैः ॥ एकस्तथा सर्वभूतान्तरात्मा न लि-
प्यते लोकदुःखेन वाह्यः ॥ १० ॥

एकोवशी सर्वभूतान्तरात्मा एकं रूपं वहुधा
यः करोति ॥ तमात्मस्थं येऽनुपश्यन्ति धीरास्ते-

षां सुखं शाश्वतन्नेतरेषाम् ॥ ११ ॥

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ॥ तदेव शुक्रन्तद्ब्रह्म तदेवामृतमुच्यते॥तस्मिंल्लोकाःश्रिताःसर्वे तदुनात्येति कश्चन॥एतद्वैतत् १२

अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः॥ तं स्वाच्छरीरात्प्रवृहेन्मुंजादिवेषिकां धैर्य्येण तं विद्याच्छुक्रममृतं इति ॥ १३ ॥

मुण्डकोपनिषादि ।

यत्तदहृश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः ॥ १४ ॥

दिव्योह्यमूर्त्तः पुरुषः सवाह्याभ्यन्तरोह्यजः ॥ अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतः परः ॥१५॥ हिरण्मये परे कोशे।विरजं ब्रह्म निष्कलम् ॥ तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदोविदुः १६

न तत्र सूर्योभाति न चन्द्रतारकं नेमाविद्युतोभान्ति कुतोऽयमग्निः ॥ तमेव भान्तमनुभाति

सर्वं तस्य भासा सर्वमिदं विभाति ॥ १७ ॥

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ॥ अधश्चोर्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १८ ॥

ईशोपनिषदि । अनेजदेकंमनसोजवीयोनैतद्देवा आप्नुवन् पूर्वमर्षत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपोमातरिश्वा दधाति ॥ १९ ॥

तदेजति तन्नैजति तद्दूरे तद्वदन्तिके ॥ तदन्तरस्य सर्वस्य तदु सर्वस्यास्य वाह्यतः ॥ २० ॥

सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापाविद्धम्॥ कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः २१

श्वेताश्वतरोपनिषदि ।

यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयोनज्यायोऽस्ति कश्चित् ॥ वृक्षइव स्तब्धोदिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ २२ ॥

अपाणिपादोजवनोगृहीता: पश्यत्यचक्षुः स-
शृणोत्यकर्णः॥ सर्वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥ २३ ॥

एकोदेवः सर्वभूतेषु गूढःसर्वव्यापी सर्वभूता-
न्तरात्मा॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी
चेता केवलोनिर्गुणश्च ॥ २४ ॥

गीतायां।ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते
अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ २५ ॥
सर्वतः पाणिपादं तत् सर्वतोऽक्षि शिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २६ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ २७ ॥
वहिरन्तश्च भूतानामचरं चरमेव च ॥
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥२८॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम्॥
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥२९॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते॥
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्याधिष्ठितम् ॥ ३०॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः॥
न चैनं क्लेदयन्त्यापोन शोषयति मारुतः॥ ३१॥
अच्छेद्योयमदाह्योऽयमक्लेद्योऽशोष्यएव च॥
नित्यः सर्वगतः स्थाणुरचलोऽय सनातनः॥ ३२॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते॥
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि॥ ३३॥
देही नित्यमवध्योऽयं देहे सर्वस्य भारत॥
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ३४
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः॥
परमात्मेति चाप्युक्तोदेहेस्मिन् पुरुषः परः॥ ३५॥
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्॥
विनश्यत्स्वविनश्यन्तं यः पश्यति सपश्यति॥ ३६॥
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः॥
शरीरस्थोपि कौन्तेय न करोति न लिप्यते॥ ३७॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥
सर्वत्रावस्थितोदेहे तथात्मा नोपलिप्यते ॥ ३८॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः॥
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ ३९॥

अथ विवेकचूडामणौ आत्मलक्षणम् ।

अथ ते संप्रवक्ष्यामि स्वरूपं परमात्मनः॥
यद्विज्ञाय नरोबन्धान्मुक्तः कैवल्यमश्नुते॥ ४०॥
अस्ति कश्चित्स्वयं नित्यमहं प्रत्ययलम्बनः॥
अवस्थात्रयसाक्षी सन्पञ्चकोशविलक्षणः॥ ४१॥
योविजानाति सकलं जाग्रत्स्वप्नसुषुप्तिषु ॥
बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् ॥ ४२॥
यः पश्यति स्वयं सर्वं यं न पश्यति कश्चन॥
यश्चेतयति बुद्ध्यादि न तद्यं चेतयत्ययम्॥ ४३॥
येन विश्वमिदं व्याप्तं यन्न व्याप्नोति किञ्चन ॥
आभारूपमिदं सर्वं यं भान्तमनुभात्ययम् ॥ ४४॥
यस्य सन्निधिमात्रेण देहेन्द्रियमनोधियः ॥

विषयेषु स्वकीयेषु वर्तन्ते प्रेरिताइव ॥ ४५ ॥
अहंकारादिदेहान्ताविषयाश्च सुखादयः ॥
वेद्यन्ते घटवद्येन नित्यबोधस्वरूपिणा ॥ ४६ ॥

एषोऽन्तरात्मा पुरुषःपुराणो, निरन्तराखण्डसुखानुभूतिः ॥ सदैकरूपः प्रतिबोधमात्रो, येनेषिता वागसवश्चरन्ति ॥ ४७ ॥

अत्रैव सत्त्वात्मनिधीगुहाया, मव्याकृताकाशउरुप्रकाशः ॥ आकाशउच्चैरविवत्प्रकाशते, स्वतेजसा विश्वमिदं प्रकाशयन् ॥ ४८ ॥

ज्ञातामनोऽहंकृतिविक्रियाणां, देहेन्द्रियप्राणकृतक्रियाणाम् ॥ अयोऽग्निवत्तानतुवर्तमानो, न चेष्टते नो विकरोति किञ्चन ॥ ४९ ॥

न जायते नो म्रियते न वर्धते, न क्षीयते नो विकरोति नित्यः ॥ विलीयमानेऽपि वपुष्यमुष्मिन्न लीयते कुम्भइवाम्बरः स्वयम् ॥ ५० ॥

प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः,

सदसदिदमशेषं भासयन्निर्विशेषः ॥
विलसति परमात्मा जाग्रदादिष्ववस्था-
स्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥५१॥
अतः परंब्रह्म सदद्वितीयं, विशुद्धविज्ञानघनं-
निरञ्जनम् ॥ प्रशान्तमाद्यन्तविहीनमक्रियं, नि-
रन्तरानन्दरसस्वरूपम् ॥ ५२ ॥
निरस्तमायाकृतसर्वभेदं, नित्यं सुखं निष्कल-
मप्रमेयम् ॥ अरूपमव्यक्तमनाख्यमव्ययं, ज्योतिः
स्वयं किञ्चिदिदं चकास्ति ॥ ५३ ॥
ज्ञातृज्ञेयज्ञानशून्यमनन्तं निर्विकल्पकम् ॥
केवलाखण्डचिन्मात्रं परं तत्त्वं विदुर्बुधाः ॥ ५४ ॥
अहेयमनुपादेयं मनोवाचामगोचरम् ॥
अप्रमेयमनाद्यन्तं ब्रह्मपूर्णमहं महः ॥५५ ॥
अथाध्यात्मरामायणे आत्मविचारः ॥ श्रीमहादेव उवाच ।
ततोरामः स्वयं प्राह हनुमन्तमुपास्थितम् ॥
शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ५६

आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् ॥
जलाशये महाकाशस्तदवच्छिन्न एव हि ॥ ५७ ॥
प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः ॥
बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् ॥ ५८ ॥
आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः ॥
साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि ॥ ५९ ॥
साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाऽबुधैः ॥
आभासस्तु मृषाबुद्धिरविद्याकार्यमुच्यते ॥ ६० ॥
अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः ॥
अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते ॥ ६१ ॥
तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा ॥
ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः ६२
तदाविद्यास्वकार्यैश्च नश्यत्येव न संशयः ॥
एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥ ६३
शंखस्मृ० । पृथिव्यापस्तथा तेजोवायुराकाशमेव च
पञ्चैतानि विजानीयान्महाभूतानि पण्डितः ६४

चक्षुः श्रोत्रं स्पर्शनं च रसनं घ्राणमेव च ॥
बुद्धीन्द्रियाणि जानीयात्पञ्चेमानि शरीरके ६५
रूपं शब्दस्तथा स्पर्शो रसो गन्धस्तथैव च ॥
इन्द्रियार्थान् विजानीयात्पञ्चैव सततं बुधः ६६
हस्तौ पादावुपस्थं च जिह्वापायुस्तथैव च ॥
कर्मेन्द्रियाणि पञ्चैव नित्यमस्मिन् शरीरके॥६७॥
मनोबुद्धिस्तथैवात्मा ह्यव्यक्तं च तथैव च ॥
इन्द्रियेभ्यः पराणीह चत्वारि कथितानि च॥६८॥
चतुर्विंशत्यथैतानि तत्त्वानि कथितानि च ॥
तथात्मानं तद्व्यतीतं पुरुषं पञ्चविंशकम् ॥६९॥
यं तु ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः॥
तदिदं परमं गुह्यमेतदक्षरमुत्तमम् ॥ ७० ॥
अशब्दरसमस्पर्शमरूपं गन्धवर्जितम् ॥
निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम् ॥७१॥
अजं निरञ्जनं शान्तमव्यक्तं ध्रुवमक्षरम् ॥
अनादि निधनं ब्रह्म तद्विष्णोः परमं पदम् ॥७२॥

बालाग्रशतशो भागः कल्पितस्तु सहस्रधा ॥
तस्यापि शतमाद्भागाज्जीवः सूक्ष्म उदाहृतः ॥७३॥
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥७४॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ७५
एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥
दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ७६

अथ परमहंसानां समाधिविधिं व्याख्यास्यामः ।

ॐ सच्छब्दवाच्यमविद्याशबलं ब्रह्म ब्रह्मणोऽव्यक्तम् ॥ अव्यक्तान्महत् महतोहंकारः अहंकारात्पञ्च तन्मात्राणि पञ्च तन्मात्रेभ्यः पञ्च महाभूतानि पञ्च महाभूतेभ्योऽखिलं जगत् ॥ पञ्चानामेकैकं द्विधा विभज्य स्वार्धभागं विहायार्द्धभागं चतुर्धा विभज्येतरेषु योजिते पञ्चीकरणं मायारूपदर्शनमध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्य-

ते ॥ॐ पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सर्वं विराडित्युच्यते ॥ एतत् स्थूलशरीरमात्मनः॥ इन्द्रियैरर्थोपलब्धिर्जागरितम् ॥ एतदुभयाभिमान्यात्मा विश्वः एतत् त्रयमकारः ॥ अपञ्चीकृतपञ्चमहाभूतानि पञ्च तन्मात्राणि तत्कार्यं च पञ्च प्राणाः दशेन्द्रियाणि मनोबुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते एतत् सूक्ष्मशरीरमात्मनः ॥ करणेषूपसंहृतेषु जागरितं संस्कारजः प्रत्ययः सविषयः स्वप्नइत्युच्यते ॥ तदुभयाभिमान्यात्मा तैजसः ॥ एतत् त्रयमुकारः॥ शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते ॥ एतत् कारणशरीरमात्मनः ॥ तच्च न सत् नासत् नापि सदसत् न भिन्नं नाभिन्नं नापि भिन्नाभिन्नं कुतश्चित् ॥ न निरवयवं न सावयवं नोभयम् ॥ किन्तु केवलब्रह्मात्मैकत्वज्ञानापनोद्य ऽ सर्वप्रकारज्ञानोपसंहारे बुद्धेः कारणा-

त्मनावस्थानं सुषुप्तिः ॥ तदुभयाभिमान्यात्मा प्राज्ञः ॥ एतत् त्रयं मकारः ॥ अकारउकारे उकारोमकारे मकार ॐकारे ॐकारोहमेव अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः ॥ नाज्ञानं नापि तत्कार्यं किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः ॥ तत्त्वमसि ॥ अहं ब्रह्मास्मि ॥ प्रज्ञानमानन्दं ब्रह्म ॥ अयमात्मा ब्रह्म इत्यादिश्रुतिभ्यः ॥ ७७ ॥ इति ॥

अथ कालज्ञानेन समाधिप्रकारः ।

अंगुल्यंगुष्ठजोनादः क्षणः स्यात्तद्वयं त्रुटिः ॥
द्वाभ्यां चैव लयस्ताभ्यां निमेषोपि च तद्वयम् ७८
तैः पञ्चदशाभिः काष्ठा तास्त्रिंशत्तु कलाःस्मृताः ॥
ताद्विंशतित्रिभागश्च घटिकेति प्रकीर्त्तिता ॥ ७९ ॥
तद्वयं च मुहूर्त्तः स्यात्तत्त्रिंशद्भिः क्षपा दिनम् ॥
तत्पञ्चदशकं पक्षस्तद्द्वयं मासउच्यते ॥ ८० ॥
तद्द्वयं ऋतुरित्युक्तं तद्द्वयं कालउच्यते ॥

तत्सार्द्धमयनं प्रोक्तं तद्द्वयं वत्सरः स्मृतः ॥८१॥
पञ्चभिस्तैर्युगः प्रोक्तः सद्वादशकषाष्टिकाः ॥
षाष्टिकः षाष्टिगुणितोवाक्पतेर्युगउच्यते ॥ ८२॥
षष्टिकः सोपि कालज्ञैः प्रजानाथयुगः स्मृतः ॥
तद्द्वयं तु कलिः प्रोक्तस्तद्द्वयं द्वापरोभवेत् ८३
कलित्रयेण त्रेता स्यात्कृतः कलिचतुष्टयम् ॥
कलिभिर्दशभिर्ब्रह्मंश्चतुर्युगामिति स्मृतम् ॥८४ ॥
चतुर्युगसहस्रेण ब्रह्माहः कल्पउच्यते ॥
अष्टयुगा भवेत् सन्ध्या सायं सन्ध्या च तावती८५
तदेकसप्ततिगुणं मन्वन्तरामिति स्थितम् ॥
मन्वन्तरद्वयेनेह शक्रपातः प्रकीर्तितः ॥८६ ॥
एतन्मानेन वर्षाणां शतं ब्रह्मक्षयः स्मृतः॥
ब्रह्मक्षयशतेनापि विष्णोरेकमहर्भवेत् ॥ ८७ ॥
एतद्दिवसमानेन शतवर्षेण तत्क्षयः ॥
तत्क्षयस्त्रिगुणोष्टाभीरुद्रस्य त्रुटिरुच्यते ॥८८ ॥
एकमाब्दिकमानेन प्रयातेऽब्दशतं द्विजाः ॥

रुद्रश्चात्मनि लीयेत निष्कलं तं निरामयम् ८९
निष्कंपं च जगद्व्योम व्योमातीतं परं पदम् ॥
तन्निदिध्यानसंशुद्ध्या सतत्रैव निलीयते ॥९०॥

परं पराणां परमं विचिन्त्यं, परात्परं दिष्टपदादतीतम् ॥ क्षणादिकालक्रमशोऽद्यमेव, प्रयाति तं तत्परमव्ययं च ॥ ९१ ॥

तमात्मरूपं परमव्ययं च, विश्वेश्वरं चित्तभवं प्रपद्ये॥ शान्तिं च गत्वा विधिना च योगी, प्रयाति तद्वै परमव्ययं च ॥ ९२ ॥

कालज्ञानेन योगोयं योगिभिर्ध्यानकारिभिः॥
मुमुक्षुभिः सदा ध्येयं निरालम्बं परं पदम् ॥९३॥

अथात्मपञ्चकस्तोत्रमारम्भः ।

नाहं देहो नेन्द्रियाण्यन्तरंगं, नाहंकारः प्राणवर्गो न बुद्धिः॥ दारापत्यक्षेत्रवित्तादिदूरः, साक्षी नित्यः प्रत्यगात्मा शिवोहम्॥ ९४ ॥

रज्ज्वज्ञानाद्भाति रज्जुर्यथाहिः, स्वात्माज्ञाना-

दात्मनोजीवभावः॥ आप्तोक्त्या हि भ्रान्तिनाशं सरज्जु,जीवोनाहं देशिकोक्त्या शिवोहम् ॥६५॥

आभातीदं विश्वमात्मन्यसत्यं, सत्यज्ञानानन्दरूपं विमोहात् ॥ निद्रामोहात्स्वप्नवत्तन्न सत्यं, शुद्धः पूर्णोनित्यएकः शिवोहम् ॥ ६६ ॥

मत्तोनान्यत्किंचिदत्रास्ति विश्वं, सत्वं वाह्यं वस्तुमायोपक्लृप्तम् ॥ आदर्शान्तर्भासमानस्य तुल्यं, मय्यद्वैते भाति तस्माच्छिवोहम् ॥ ६७॥

नाहं जातोन प्रवृद्धोन नष्टो, देहस्योक्ताः प्राकृताः सर्वधर्माः ॥ कर्तृत्वादिश्चिन्मयस्यास्ति नाहंकारस्यैव ह्यात्मनोमे शिवोहम् ॥ ६८ ॥

नाहं जातोजन्ममृत्युः कुतोमे, नाहंप्राणः क्षुत्पिपासे कुतोमे ॥नाहं चित्तं शोकमोहौ कुतोमे, नाहंकर्ता बन्धमोक्षौ कुतोमे ॥ ६९ ॥

इति श्रीमच्छङ्कराचार्यविरचितमात्मपञ्चकस्तोत्रं सम्पूर्णम् ॥

अथ साधनपञ्चकस्तोत्रप्रारम्भः ।

वेदोनित्यमधीयतां तदुदितं कर्मस्वनुष्ठीयतां,

तेनेशस्य विधीयतामपचितिं काम्ये मतिस्त्यज्यताम्
पापौघः परिधूयतां भवसुखे दोषोनुसन्धीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्
संगः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां,
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संन्यस्यताम्
सद्विद्वानुपसर्प्यतामनुदिनं तत्पादुके सेव्यतां,
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् १
वाक्यार्थश्च विचार्यतां श्रुतिशिरः पक्षः समाश्रीयतां
दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम्
ब्रह्मास्मीति विभाव्यतामहरहो गर्वः परित्यज्यतां,
देहेऽहंमतिरुज्झितां बुधजनैर्वादः समुत्सृज्यताम् २
क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां,
स्वाद्वन्नं न च याच्यतां विधिवशात्प्राप्तेन सन्तुष्यताम्
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां,
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यताम् ३

एकान्तेसुखमास्यतां परतरे चेतः समाधीयतां,
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितंदृश्यताम्।
प्राक्कर्मप्रविलाप्यतांचितिबलान्नाप्युत्तरैःश्लिष्यतां,
प्रारब्धंत्विहभुज्यतामथपरब्रह्मात्मनास्थीयताम्॥ ४ ॥

इति श्रीमच्छङ्कराचार्यविरचितं साधनपञ्चकस्तोत्रं सम्पूर्णम् ॥

अथ निर्वाणषट्कस्तोत्रमारम्भः ।

मनोबुद्ध्यहंकारचित्तानि नाहं, न च श्रोत्र-जिह्वे न च घ्राणनेत्रे॥ न च व्योम भूमिर्न तेजोन वायुश्चिदानन्दरूपः शिवोहं शिवोहम् ॥ ५ ॥

अहं प्राणवर्गोन पञ्चानिलामे, न तोयं न मे धातवोनैव कोशाः॥ न वाक् पाणिपादौ न चोप-स्थपायू,चिदानन्दरूपः शिवोहं शिवोहम ॥ ६ ॥

न मे द्वेषरागौ न मे लोभमोहौ, मदोनैव मे नैव मात्सर्यभानम्॥ न धर्मोन चार्थोन कामोन मोक्ष-श्चिदानन्दरूपः शिवोहं शिवोहम् ॥ ७ ॥

न पुण्यं न पापं न सौख्यं न दुःखं, न मन्त्रोन

तीर्थं न वेदा न यज्ञाः ॥ अहंभोजनं नैव भोज्यं न भोक्ता, चिदानन्दरूपः शिवोहं शिवोहम् ॥ ८ ॥

न मे मृत्युशङ्का न मे जातिभेदः, पिता नैव मे नैव माता न जन्म ॥ न बन्धुर्न मित्रं गुरुर्नैव शिष्य, श्चिदानन्दरूपः शिवोहं शिवोहम् ॥ ९ ॥

अहं निर्विकल्पी निराकाररूपी विभुर्व्याप्य सर्वत्र सर्वेन्द्रियाणि ॥ सदा मे समत्वं न मुक्तिर्न बन्ध, श्चिदानन्दरूपः शिवोहं शिवोहम् ॥४१०॥

इति श्रीमच्छङ्कराचार्यविरचितं निर्वाणषट्कस्तोत्रं सम्पूर्णम् ।

अथ हस्तामलकस्तोत्रप्रारम्भः । श्रीशङ्कराचार्य उवाच ।

कस्त्वं शिशो कस्य कुतोऽसि गन्ता, किं नाम ते त्वं कुतआगतोऽसि ॥ एतन्मयोक्तं वद चार्भक त्वं, मत्प्रीतये प्रीतिविवर्धनोऽसि ॥ ११ ॥

हस्तामलक उवाच ।

नाहं मनुष्योन च देवयक्षौ, न ब्राह्मणक्षत्रिय-वैश्यशूद्राः ॥ न ब्रह्मचारी न गृही वनस्थो, भिक्षु-र्न चाहं निजबोधरूपः ॥ १२ ॥

निमित्तं मनश्चक्षुरादिप्रवृत्तौ, निरस्ताखिलोपा-
धिराकाशकल्पः ॥ रविर्लोकचेष्टा निमित्तं यथायः,
सन्नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १३ ॥

यमग्न्युष्णवन्नित्यबोधस्वरूपं, मनश्चक्षुरादी-
न्यबोधात्मकानि॥प्रवर्तन्तआश्रित्य निष्कम्पमेकं,
सनित्योपलब्धिस्वरूपोहमात्मा ॥ १४ ॥

मुखाभासकोदर्पणे दृश्यमानो, मुखत्वात्पृथक्त्वेन
नैवास्ति वस्तु ॥ चिदाभासकोधीषु जीवोऽपि
तद्धवत्, सनित्योपलब्धिस्वरूपोहमात्मा ॥ १५ ॥

यथा दर्पणाभावआभासहानौ, मुखं विद्यते
कल्पनाहीनमेकम् ॥ तथा धीवियोगे निराभास-
कोयः, सनित्योपलब्धिस्वरूपोहमात्मा ॥ १६ ॥

मनश्चक्षुरादेर्वियुक्तः स्वयं यो, मनश्चक्षुरादेर्म-
नश्चक्षुरादिः ॥ मनश्चक्षुरादेरगम्यस्वरूपः, सनि-
त्योपलब्धिस्वरूपोहमात्मा ॥ १७ ॥

यएकोविभाति स्वतः शुद्धचेताः, प्रकाशस्व-

रूपोऽपि नानेव धीषु ॥ शरावोदकस्थोयथाभानु-
रेकः,सनित्योपलब्धिस्वरूपोहमात्मा ॥ १८ ॥

यथानेकचक्षुः प्रकाशोरविर्न, क्रमेण प्रकाशी
करोति प्रकाश्यम्॥ अनेकाधियोयस्तथैकःप्रबोधः,
सनित्योपलब्धिस्वरूपोहमात्मा ॥ १६ ॥

विवस्वत्प्रभातं यथा रूपमक्षं,प्रगृह्णाति नाभा-
तमेवं विवस्वान् ॥ तथाभातमाभासयत्यक्षमेकः,
सनित्योपलब्धिस्वरूपोहमात्मा ॥ ४२० ॥

यथा सूर्यएकोप्स्वनेकश्चलासु,स्थिरास्वप्यन-
न्यद्विभाव्यस्वरूपः॥चलासु प्रभिन्नासु धीष्वेक-
एव,सनित्योपलब्धिस्वरूपोहमात्मा ॥ २१ ॥

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं, यथा निष्प्रभं
मन्यते चातिमूढः॥तथा बद्धवद्भाति योमूढदृष्टेः
सनित्योपलब्धिस्वरूपोहमात्मा ॥ २२ ॥

समस्तेषु वस्तुष्वनुस्यूतमेकं,समस्तानि वस्तूनि
यन्न स्पृशन्ति ॥ वियद्वत्सदा शुद्धमच्छस्वरूपं,

सनित्योपलब्धिस्वरूपोहमात्मा ॥ २३ ॥

उपाधौ यथाभेदता सन्मणीनां, तथाभेदता बुद्धिभेदेषु तेऽपि॥ यथा चन्द्रिकाणां जले चञ्चलत्वं, तथा चञ्चलत्वं तवापीह विष्णो ॥ २४ ॥

इति हस्तामलकस्तोत्रं समाप्तम् ॥

अथ प्रणवविचारः ॥ प्रश्नोपनिषदि ।

अथ हैनं शैब्यः सत्यकामः पप्रच्छ॥ सयोह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव सतेन लोकं जयतीति ॥ २५ ॥

तस्मै स होवाच।एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २६ ॥

सयद्येकमात्रमभिध्यायीत सतेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते॥तमृचोमनुष्यलोकमुपनयन्ते सतत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥ २७ ॥

अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्त-

रिक्षं यजुर्भिरुन्नीयते ससोमलोकम्॥ससोमलोके विभूतिमनुभूय पुनरावर्त्तते ॥ २८ ॥

यः पुनरेतन्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत सतेजसि सूर्य्ये सम्पन्नोयथा-पादोदरस्त्वचा विनिर्म्मुच्यत एवं ह वै सपाप्मना-विनिर्मुक्तःससामभिरुन्नीयते ब्रह्मलोकं सएतस्मा-ज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ २९ ॥

तिस्रोमात्रामृत्युमत्यः प्रयुक्ताअन्योन्यसक्ता-अनविप्रयुक्ताः॥ क्रियासु वाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पतेज्ञः ॥ ४३० ॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं ससामभिर्यत्तत्कव-योवेदयन्ते॥ तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति ॥ ३१ ॥

माण्डूक्योपनिषदि।ओमित्येतदक्षरमिदं सर्वं त-स्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार-

एव॥ यच्चान्यत् त्रिकालातीतं तदप्योङ्कारएव ३२

सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ ३३ ॥

जागरितस्थानोबहिः प्रज्ञः सप्तांगएकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः॥३४॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्तांगएकोनविंशतिमुखः प्रविविक्तभुक् तैजसोद्वितीयः पादः ॥ ३५ ॥

यत्र सुप्तोन कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् ॥ सुषुप्तस्थानएकीभूतः प्रज्ञानघनएवानन्दमयोह्यानन्दभुक् चेतोमुखःप्राज्ञस्तृतीयः पादः ॥ ३६ ॥

एषसर्वेश्वरएषसर्वज्ञएषोऽन्तर्य्याम्येषयोनिःसर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ३७ ॥

नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् ॥ अदृष्टमव्यवहार्यमग्राह्यमलक्षणमाचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं

प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते सआत्मा सविज्ञेयः ॥ ३८ ॥

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादामात्रामात्राश्च पादाअकारउकारमकारइति ॥ ३९ ॥

जागरितस्थानोवैश्वानरोऽकारः प्रथमामात्राऽऽप्तेरादिमत्वाद्वाप्नोति ह वै सर्वान् कामानादिश्च भवति यएवं वेद ॥ ४४० ॥

स्वप्नस्थानस्तैजसः उकारोद्वितीयामात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति यएवं वेद ॥ ४१ ॥

सुषुप्तस्थानः प्राज्ञोमकारस्तृतीयामात्रामितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति यएवं वेद ॥ ४२ ॥

अमात्रश्चतुर्थो ऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतएवमोङ्कारआत्मैव संविशत्यात्मनाऽऽत्मानं यएवं वेद यएवं वेदेति ॥ ४३ ॥

कठोपनिषदि । अन्यत्र धर्मादन्यत्राधर्मादन्य-
त्रास्मात् कृताकृतात् ॥ अन्यत्र भूताच्च भव्याच्च
यत्तत्पश्यसि तद्वद ॥ ४४ ॥

सर्वे वेदायत्पदमामनन्ति तपांसि सर्वाणि च
यद्वदन्ति ॥ यदिच्छन्तोब्रह्मचर्यं चरन्ति तत्ते पदं
संग्रहेण ब्रवीम्योमित्येतत् ॥ ४५ ॥

एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम् ॥
एतद्ध्येवाक्षरं ज्ञात्वा योयदिच्छति तस्य तत् ४६
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ॥
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥४७॥इति

अथ गौडपादीयकारिकायाम् ।

ओङ्कारं पादशोविद्यात् पादा मात्रा न संशयः ॥
ओङ्कारं पादशोज्ञात्वा न किञ्चिदपि चिन्तयेत्॥
युञ्जीत प्रणवे चेतः प्रणवोब्रह्म निर्भयम् ॥
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित्॥४८॥
प्रणवोह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ॥

अपूर्वोऽनन्तरोवाह्योन परः प्रणवोऽव्ययः ॥४५०॥
सर्वस्य प्रणवोह्यादिर्मध्यमान्तस्तथैव च ॥
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम्॥ ५१॥
प्रणवोहीश्वरं विद्यात्सर्वस्य हृदि संस्थितम् ॥
सर्वव्यापिनमोङ्कारं मत्वा धीरोन शोचति॥५२॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥
ओङ्कारोविदितोयेन समुनिर्नेतरोजनः॥५३॥इति

अथ पराशरोपि ।

प्रणवोहि परं तत्त्वं त्रिवेदं त्रिगुणात्मकम् ॥
त्रिदैवतं त्रिधामं च त्रिः प्रज्ञं त्रिरवस्थितम्॥५४॥
त्रिमात्रं च त्रिकालं च त्रिलिङ्गं मुनयोविदुः ॥
सर्वमेतत् त्रिरूपेण व्याप्तं तु प्रणवेन हि ॥५५॥
पर्यवस्याति यत्रैव विश्वमुत्पद्यते यतः ॥
निर्मात्रकः समात्रोपि सादिरेव निरादिकः॥५६॥
तथा सत्यपि चैकोयं घटाकाशइव स्थितः॥
कर्मारम्भेषु सर्वेषु त्रिमात्रः सम्प्रकीर्तितः ॥५७॥

प्रणवाद्याः स्मृतावेदाः प्रणवे पर्यवस्थिताः॥
वाङ्मयं प्रणवे सर्वं तस्मात् प्रणवमभ्यसेत् ॥५८॥

उत्पन्नमेतच्च यतः समस्तं, व्यावृत्य तिष्ठेत्प्रलयेपि यत्र॥ एकाक्षरेणापि जगन्ति येन, व्याप्तानि कोन्यः परमोस्ति तस्मात् ॥ ५६ ॥

ध्येयं न जप्यं न च पूजनीयं, यस्मान्न देवाद्धरणीयमन्यत्॥ दुस्तारसंसारपयोधिमग्नताराय [illegible]ुः परमः सपूज्यः ॥ ४६० ॥

संन्यासोपनिषादि ।

सर्वेषामेव पापानां संघाते समुपस्थिते ॥
तारं द्वादश साहस्रमभ्यसेच्छेदनं हि तत्॥ ६०॥
यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् ॥
तस्य द्वादशभिर्मासैः परंब्रह्म प्रकाशते ॥ ६२॥

नृसिंहतापिन्युपनिषादि ।

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्

स्त्रीशूद्रः सम्रृतोऽधोऽगच्छति तस्मात्सर्वदा नाचष्टे यद्याचष्टे सआचार्यस्तेनैव समृतोऽधोगच्छति ६३

इति योदेवोऽग्नौयोप्सु योविश्वं भुवनमाविवेश॥ य ओषधीषु योवनस्पतिषु तस्मै देवाय नमोनमः॥ गुरुभ्योनमः ॥ परमगुरुभ्योनमः॥ इत्योम् तत्सद्ब्रह्मणे नमः॥ ब्रह्मार्पणमस्तु ॥

नाना शास्त्राणि वुद्ध्वा सरलमतिमतामाञ्जसा धर्ममार्तुं,
वर्णानामाश्रमाणां स्मृतिनिकरवचोगुम्फितस्संक्रमेण।
सृष्टिस्थित्यन्तकर्त्तुश्चरणकमलयोरर्पितस्सादरेण,
ग्रन्थोवोभातु लोके सुकृतिवहुमुदे धर्म्ममार्तण्डनामा १

इतिश्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीमन्माधवानन्दसरस्वतीपूज्यपाद-
शिष्यमहादेवानन्दसरस्वतीसंगृहीतोधर्ममार्त्तण्डः
समाप्तिमगात्॥ ओंतत्सत्॥